# साहित्यसपर्या

प्रधानसम्पादकः
डॉ० एन्० आर्० कण्णन्

सम्पादिका
प्रो० शैलकुमारी मिश्रः

सहसम्पादिका
डॉ० अपराजिता मिश्रः

औचित्यम्
ध्वनिः
वक्रोक्तिः
अलंकारः
रीतिः
रसः

रसो वै सः



राष्ट्रिय-संस्कृत-संस्थानम्

# SAHITYASAPARYA

## [ Vakkroktisiddhantparishilanam ]

## *NATIONAL SEMINAR*


**General Editor**
**Dr. N. R. Kāṇṇan**
Principal
Gangā Nāth Jhā Campus, Allahabad

**Edited by**
**Prof. Shail Kumari Mishra**
Head of Department-Sahitya
Gangā Nāth Jhā Campus, Allahabad

**Co-Edited by**
**Dr. Aprajita Mishra**
Asst. Professor-Sahiya
Gangā Nāth Jhā Campus, Allahabad





**Rashtriya Sanskrit Sansthanam**
**(Deemed University)**
**Gangānātha Jhā Campus**
**Chandrashekhar Āzād Park**
**Allahabad-211002**
**2017-18**

# साहित्यसपर्या

## [ वक्रोक्तिसिद्धान्तपरिशीलनम् ]

## *राष्ट्रिया संगोष्ठी*

प्रधानसम्पादकः
**डॉ० एन्० आर्० कण्णन्**
प्राचार्यः
गङ्गानाथझापरिसरः, इलाहाबाद

सम्पादिका
**प्रो० शैलकुमारी मिश्रः**
साहित्यविभागाध्यक्षः
गङ्गानाथझापरिसरः, इलाहाबाद

सह-सम्पादिका
**डॉ० अपराजिता मिश्रः**
सहायक-आचार्यः, साहित्यविभागः
गङ्गानाथझापरिसरः, इलाहाबाद



**राष्ट्रियसंस्कृतसंस्थानम्**
( मानितविश्वविद्यालयः )
**गङ्गानाथझापरिसरः**
आजादोद्यानम्, प्रयागः-२११००२
**२०१७-१८**

प्रकाशक : प्राचार्यः
राष्ट्रियसंस्कृतसंस्थानम्
(मानितविश्वविद्यालयः)
गङ्गानाथझापरिसरः चन्द्रशेखराजादोद्यानम्
प्रयागः-२११००२ (उ०प्र०) भारत



ISBN 978-93-85791-29-1

प्रथमसंस्करणम् : २०१७-१८

मूल्यम् : ₹ २८०/-

मुद्रक :
अक्षयवट प्रकाशनम्
२६, बलरामपुर हाउस
इलाहाबाद-२११००२

प्रो० पी०एन्० शास्त्री
कुलपति
राष्ट्रिय-संस्कृत-संस्थान
मानित विश्वविद्यालय
( मानव संसाधन विकास मंत्रालय, भारत सरकार के अधीन )
( 'ए' ग्रेड के साथ राष्ट्रीय मूल्यांकन एवं प्रत्यायन परिषद् द्वारा मान्यता प्राप्त )



Prof. P.N. Shastry
Vice-Chancellor
Rashtriya Sanskrit Sansthan
Deemed to be University
(Under MHRD, Govt. of India)
(Accredited by NAAC with 'A' Grade)

RSKS/VC/Msg/2018-19-47

Date : 06.06.2018



## शुभाशंसा

प्रयागस्थे (इलाहाबाद) गङ्गानाथझा परिसरे समायोजितायां राष्ट्रियसंगोष्ठ्यां समुपस्थापितानि शोधपत्राणि 'साहित्यसपर्या' पत्रिकायां प्रकाश्यन्ते इति ज्ञात्वा सन्तोषमनुभवामि। सेऽयं पत्रिका छात्राणां कृते साहित्योपासकानां च कृते उपकाराय इति भावये पत्रिकाप्रकाशनकर्मणि निरतेभ्यः शुभकामनाः। इति।

प. ना. शास्त्री

( परमेश्वरनारायणशास्त्री )
कुलपतिः

डॉ० एन्० आर्० कण्णन्
प्राचार्यः
राष्ट्रिय-संस्कृत-संस्थानम्
मानित विश्वविद्यालयः
गङ्गानाथझा-परिसरः
भारतशासनस्यमानव-संसाधन-
विकासमन्त्रालयाधीनः



**Dr. N. R. Kannan**
Principal
**Rashtriya Sanskrit Sansthan**
Deemed University
**Ganga Nath Jha Campus**
Under the Ministry of Human
Resource Development, Govt. of India



## शुभाशंसा

अथैषमोऽस्य राष्ट्रियसंस्कृतसंस्थानान्तर्गतस्य गङ्गानाथझापरिसरस्य द्वारा २०१७ खीष्टाब्दे "वक्रोक्तिसिद्धान्तपरिशीलनम्" इति विषयमधिकृत्य प्रवृत्तायाः राष्ट्रियसाहित्य-संगोष्ठ्याः पत्रिका एतत्परिसरद्वारा प्रकाश्यत इति ज्ञात्वा नितान्तं प्रसीदति मे मनः।

सर्वोऽपि जनः स्वाभिलषितं प्राप्तुमिच्छति अनिष्टञ्च निवर्तयितुम्। सर्वस्यापि लोकस्य अत्यन्तमिष्टं सुखमेव अन्यस्य समस्तस्यापीष्यमाणस्य सुखनिबन्धनेच्छु-विषयत्वात्। परमञ्चानिष्टं (द्वेष्यं) दुःखमेव अन्यस्य द्वेष्यस्य दुःखद्वेषाधीनद्वेषविषयत्वात्। सुखदुःखे ऐहिकामुष्मिकभेदेन द्विविधे अपि अस्मत्कर्मफलभूते एव। अतोऽस्माभिः सुखसम्पत्तये दुःखनिवृत्तये च यज्ञादिकर्माणि अनुष्ठेयानि। कर्मसु प्रदत्तेन हविषा नितान्तं प्रीतास्मन्तो देवा अस्मभ्यं फलं वितरन्तीति देवमनुष्यौ अन्योन्यभावेनैव जीवतः।

यथोक्तं कृष्णयजुर्वेदे तैत्तिरीयसंहितायां–

**"तस्मादितः प्रदानं देवा उपजीवन्ति तस्मादमुतः प्रदानं मनुष्या उपजीवन्तीति।"**

एवं भगवद्गीतायामपि–

"देवान् भावयताऽनेन ते देवा भावयन्तु वः।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।।" इति।।

अतश्च सुखप्राप्तिदुःखनिवृत्तिसाधनदेवप्रीतिः यज्ञादिकर्मद्वारेणैव सम्भवतीति विदितमेव। कर्मान्तर्गताश्च यज्ञाः–

"द्रव्ययज्ञास्तपोयज्ञाः योगयज्ञास्तथाऽपरे।
स्वाध्यायज्ञानयज्ञाश्च यतयस्संशितव्रताः।।" इति।।

गीतावाक्येन बहुविधाः (दृढसंकल्पेषु यतनशीलेषु वृत्तित्वेन) प्रतिपादिताः। तदन्यतमः स्वाध्यायज्ञानयज्ञ इति स्पष्टः। अयञ्च स्वाध्यायज्ञानयज्ञो वेदवेदाङ्गभूत-व्याकरणन्यायमीमांसासाहित्यपुराणाद्यर्थज्ञानात्मक इत्यप्युक्ताः। तदिह स्वाध्यायज्ञान-यज्ञात्मकानां साहित्यवेदवेदाङ्गभूतशास्त्रादीनाम् तादृशग्रन्थानाञ्च प्रकाशन-शोधाध्ययनाध्यापनादिविषयेषु बद्धदीक्षेषु राष्ट्रियसंस्कृतसंस्थान्तर्गतेषु परिसरेषु अन्यतमः पवित्रक्षेत्रे तीर्थराजप्रयागक्षेत्रे विद्यमानः गङ्गानाथझापरिसरः विराजते। एतत्परिसरद्वारा प्रवर्तितायां साहित्यसंगोष्ठ्यां साहित्यालङ्कारादिमर्मज्ञैः पण्डितप्रकाण्डैः विविधविषयेषु विमर्शरूपेण प्रतिपादितानां विषयाणां प्रकाशनेन नूनं साहित्यशास्त्रीयविषयतत्त्वजिज्ञासूनां नूतनयुक्तिगर्भितविषयावगमद्वारा गवेषणशैलीप्रदर्शनद्वारा च महानुपकारः विषयलाभश्च भूयादिति द्रढीयान् मे विश्वासः। अस्याः संगोष्ठ्याः प्रधानसंरक्षकेभ्यः राष्ट्रियसंस्कृत-संस्थानस्य कुलपतिमहोदयेभ्यः आचार्यपरमेश्वरनारायणशास्त्रिवर्येभ्यः आदौ धन्यवादान् व्याहरामि।

एतत्प्रकाशनाय ये च विद्वांसः छात्राश्च निबन्धलेखनद्वारा स्वकीयज्ञान-सम्पत्तिमाविष्कृतवन्तः तेषां सर्वेषां साधुवादाः वितीर्यन्ते। मुख्यतया अस्याः राष्ट्रियसंगोष्ठ्याः संचालनं तथा विशेषश्रद्धया व्यवस्थां च निर्व्यूढवतीभ्यः प्रधानसंयोजिकाभ्यः सम्पादिकाभ्यः आचार्यशैलकुमारीमिश्रमहोदयाभ्यः तथा अस्याः पत्रिकाया; उपसंपादिकाभ्यः अपराजितामिश्रमहोदयाभ्यश्च धन्यवादान् व्याहरामि।

विद्वज्जनविधेयः

(डॉ० एन्० आर्० कणणन्)
प्राचार्यः

# सम्पादकवाक्

कस्या अपि भाषायाः साहित्यं समग्रतया अवगन्तुं तस्या आलोचना अपि अनिवार्या भवति। भारतीयसाहित्ये आलोचनाया महती उपादेयता वर्तते। शास्त्रकर्तुरपेक्षा आलोचकः कथमपि न्यूनो नैव भवति। आचार्यराजशेखरेण तु आलोचनाशास्त्रं वेदानां सप्तममङ्गं स्वीकृतम्। संस्कृते अस्यैव नाम अलङ्कारशास्त्रमप्यस्ति। आचार्यवामनेन अलङ्कारशब्दस्य व्यापकोऽर्थो गृहीतः– "सौन्दर्यमलङ्कारः"। वस्तुतः काव्यस्य समग्रसौन्दर्याधायकतत्त्वानां सामान्यमभिधानमस्ति–'अलङ्कारः'। अतोऽलङ्कारशब्दस्य व्यापकः सर्वग्राह्योऽर्थो 'काव्यस्य शोभावर्धकतत्त्वानां प्रतिपादकं शास्त्रम्'।

प्रारम्भिककाले तु अलङ्कारा एव काव्यस्य सर्वस्वमिति काव्यशास्त्रज्ञानाम् अभिमतमासीत्। अलङ्काराणां गहनचिन्तनस्य एव परिणामोऽयं जातः यत् परवर्तिकाले अनेकेषां काव्यतत्त्वानामाविर्भावोऽभवत्। अस्य शास्त्रस्य प्राचीनतमः प्रामाणिको ग्रन्थोऽस्ति भरतनाट्यशास्त्रम्। षष्ठशतके आचार्यभामहेन काव्यालङ्कारग्रन्थं विरच्य 'अलङ्कारशास्त्रं' स्वतन्त्ररूपेण प्रतिष्ठापितम्। अलङ्कारशास्त्रीयग्रन्थानामनुशीलनेन स्पष्टतया प्रतिभाति यत् काले-काले अस्मिन् अनेकेषां सम्प्रदायानामुद्भवोजातः। प्रायशः सर्वेषामालङ्कारिकाणां चिन्तनं काव्यस्य आत्मतत्त्वसन्दर्भे एव आसीत् यत् काव्यतत्त्वेषु कस्य प्राधान्यम्? अस्य चिन्तनस्य परिणामस्वरूपमेव आचार्याणां मते अनेकेषां सम्प्रदायानां प्रादुर्भावोऽभवत्। इत्थम् अलङ्कारशास्त्रे प्रमुखतया षट् सम्प्रदाया अभवन्। यथा–आचार्यभरतस्य रससम्प्रदायः, आचार्यभामहस्य अलङ्कारसम्प्रदायः, आचार्यवामनस्य रीतिसम्प्रदायः, आचार्यकुन्तकस्य वक्रोक्तिसम्प्रदायः, आचार्यानन्दवर्धनस्य ध्वनिसम्प्रदायः, आचार्यक्षेमेन्द्रस्य औचित्यसम्प्रदायश्चेति। एतेषु रससिद्धान्तस्य सर्वतोभावेन प्राधान्यं वर्तते। तथापि 'भिन्नरुचि र्हि लोकाः' सर्वेषां सम्प्रदायानां वैशिष्ट्यं चिन्तकानां विवेचनाया विषयो वर्तते।

संस्कृतसाहित्ये वक्रोक्ति इत्यस्याः प्रयोगः प्राचीनकालादेव अनेकेष्वर्थेषु प्रयुक्तो विद्यते। किन्तु ऐतिहासिकदृष्ट्या प्रथमतया आचार्यभामहेन अलङ्कारशास्त्रे उद्भावना कृता। भामहः काव्ये अलङ्कारेषु वक्रोक्तिं अनिवार्यतया स्वीकरोति–'वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते।' शब्दार्थयोः अन्तर्भावो वक्रोक्त्याम् (काव्या० ५/६६)। आचार्यवामनेनापि वक्रोक्तिवर्णनं कृतं किन्तु अलङ्कारान्तर्गतम्–'सादृश्याल्लक्षणावक्रोक्तिः'। रुद्रटराजशेखरयोर्मतेऽपि इयं शब्दालङ्कार एव। आचार्यदण्डिनः विचारो भिन्नः। एतेन काव्यादर्शे वक्रोक्तेः उल्लेखः कृतः। तेन सम्पूर्णं वाङ्मयं द्विधा विभक्तम्–"स्वभावोक्तिः वक्रोक्तिश्चेति।" अभिनवगुप्तः, भोजः, कुन्तकश्च प्रायशः समकालिका एव। अभिनवगुप्तेन भामहकृतलक्षणस्य व्याख्याकृता। तस्य मते अतिशयोक्तिरेव सामान्यतया अलङ्कारः। आनन्दवर्धनोऽपि वक्रोक्तिं अतिशयोक्तेः पर्यायभूतां सर्वालङ्काररूपां च स्वीकरोति। भोजराजेनापि शब्दालङ्काररूपा एव स्वीकृता वक्रोक्तिः। रुद्रटः वाक्छलाश्रित-शब्दालङ्कारमात्रमेव स्वीकरोति। अनन्तरं मम्मटविश्वनाथदयोऽपि आचार्याः प्रायः शब्दालङ्कारमात्रमेव स्वीकुर्वन्ति।

एवं वक्रोक्तेः उद्भवविकासयोश्च क्रमः आभामहात् विश्वनाथपर्यन्तमनेकमतमतान्तरैः सह

काव्यस्य मूलसौन्दर्याधायकतत्त्वादारभ्य वाक्छलमात्रमेव तिष्ठति। क्रमशः परम्परया वक्रोक्तिः सङ्कीर्णतामेव गच्छति। किन्तु वक्रोक्तिसम्प्रदायप्रवर्तकस्य आचार्यकुन्तकस्य वक्रोक्तिः सर्वतो भिन्ना काचित् विलक्षणा चास्ति। तस्य मते–''उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः। वक्रोक्तिरेववैदग्ध्यभङ्गीभणितिरुच्यते।'' वक्तोक्तिं काव्यस्य 'आत्मा' इति अङ्गीकरोति कुन्तकः। 'प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा।' अर्थात् प्रसिद्धकथनाद् भिन्ना विचित्रा अभिधा। अर्थात् अतिक्रान्तप्रसिद्धव्यवहारसरणि वक्रोक्तिः। अयं कुन्तकस्याभिप्रायः।आचार्यकुन्तकेन उद्भाविता वक्रोक्तिः उदात्ता व्याप्या चास्ति। यत्र ध्वनेः समस्तभेदाः समाहिताः सन्ति। यस्या वक्रोक्तिसन्दर्भे आचार्यभामहेन 'निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम्' इत्युक्त्वा बीजारोपणं कृतं तामेव काव्यस्य आत्मतत्त्वेन प्रतिष्ठापनस्य श्रेयः कुन्तकं प्रति गच्छति। एवं कुन्तकस्य मतानुसारं–शब्दार्थरूपिणं अलङ्कार्यं काव्यशरीरं या अलङ्करोति सा वक्रोक्तिः।''

इत्थं भामहात् विश्वनाथपर्यन्तं वक्रोक्तेः परम्परा विद्वद्भिः आलोचनीया परिशीलनीया च विद्यते। कालिदासादिमहाकवीनां काव्येषु अस्याः प्रयोगो दरीदृश्यते।

वक्रोक्तिसिद्धान्तमाश्रित्य एका दिनद्वयव्यापिनी संगोष्ठी गङ्गानाथझापरिसरस्य साहित्यविभागेन २०१७ मार्च मासस्य ७–८ दिनाङ्कयोः समायोजिता आसीत्। सङ्गोष्ठिकृते अनुमतिं सौविध्यञ्च प्रदाय अस्माकं प्रधानसंरक्षकाः राष्ट्रिय–संस्कृत–संस्थानस्य (मानितविश्वविद्यालयस्य) कुलपति–महोदयाः प्रो० परमेश्वरनारायणशास्त्रिवर्याः अस्मान् भृशमुपकृतवन्तः तेषां कृते सादरम् आधमर्ण्यं व्यनज्मि। अस्माकं प्राचार्यान् विद्वत्तल्लजान् एन्० आर्० कण्णन् वर्यान् प्रति हार्दिकं कार्तज्ञ्यं बिभर्मि। एतेषां कुशलमार्गनिर्देशने इयं संगोष्ठी सफला जाता। संगोष्ठीपत्रिकाप्रकाशने चापि तेषां महती प्रेरणा आसीत्। अस्यां संगोष्ठ्यां साहित्यशास्त्रे कृतभूरिपरिश्रमाः, अनेकशास्त्रविचक्षणाः महान्तो विद्वांसः सम्पूर्णानन्द–संस्कृत–विश्वविद्यालयस्य साहित्यविभागाध्यक्षचराः आचार्यप्रवराः–पण्डितशिवजीउपाध्यायवर्याः, काशीहिन्दूविश्वविद्यालयतः प्रो० कौशलेन्द्र पाण्डेय महोदयाः लक्ष्मणपुरपरिसरतः प्रो० रामलखनपाण्डेयमहोदयाः, जयपुरपरिसरतः प्रो० रामकुमारशर्ममहोदयाः, 'राष्ट्रिय–संस्कृत–विद्यापीठम्' तिरुपतितः साहित्यविभागाध्यक्षाः प्रो० कृष्णमूर्तिवर्यादयोविद्वांसः समागत्य स्वकीयैः सारगर्भितैः, वैदुष्यपूर्णैः, विषयाधारितैः व्याख्यानैरिदं सारस्वतमनुष्ठानं सफलं कृतम्। एतान् सर्वान् प्रति अहं साहित्यविभागापक्षतः परिसरपक्षतश्च भूयो–भूयो हार्दिकीं कृतज्ञतां व्याहरामि। अस्याः संगोष्ठ्याः संयोजने परिसरस्य सर्वेऽपि विद्वांसः कर्मचारिणश्च श्रद्धया सहयोगिनः आसन् तान् प्रत्यहं कृतज्ञा अस्मि। अत्र ये शोधच्छात्राः भागं गृहीवन्तः तेऽपि आशीर्वादभाजः सन्ति। अन्ते च सम्यक् मुद्रणाय अक्षयवटप्रकाशनस्यकृते धन्यवादं वितीर्य, साम्बसदाशिवचरणारविन्देषु समर्पयामि।

प्रो० शैलकुमारी मिश्रः
साहित्यविभागाध्यक्षः

□□

# विषयानुक्रमणिका

□□

# कुन्तकाचार्यस्य वक्रोक्तिसिद्धान्तः

–प्रो० रामलखन पाण्डेयः

रसालङ्काररीतिध्वनिवक्रोक्त्यौचित्याख्येषु काव्यशास्त्रीयषड्विधप्रस्थानेषु वक्रोक्तिप्रस्थानस्य प्रवर्तनं कुन्तकाचार्येण वक्रोक्तिजीविते नाम स्वग्रन्थे व्यधायि। काव्यशास्त्रीयो वक्रोक्तिसिद्धान्तस्तत्र तथा प्रौढितया प्रतिपादितो बभूव यद्वक्रोतिरियं काव्यस्यात्मस्थानीयतत्त्वतया प्रसिद्धिमवाप। काव्यशास्त्रपितामहेन भामहाचार्येण काव्यालङ्काराख्ये स्वग्रन्थे यस्याः वक्रोक्तेरूल्लेखोऽलङ्कार सामान्यतया व्यधायि, सा एव वक्रोक्तिर्वक्तिजीवितकारस्य कृते काव्यजीवातुभूता समजनि। भामहस्य काव्यालङ्कारे वक्रोक्तिविषयिणी प्रसिद्धा कारिका वर्तते–

सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारेऽनया विना।।[१]

अलङ्कारवादी भामहाचार्योऽयं सर्वविधेप्वप्यलङ्कारेषु वक्रोक्तेः संस्कारविशेषं स्वीकृत्यापि काव्यस्यात्मस्थानीयं तत्त्वं त्वलङ्कारमेव स्वीकरोति। किन्तु कुन्तकः यां वक्रोक्तिमङ्गीकरोति सा वक्रोक्तिः सर्वालङ्कारजननी भूत्वा स्वात्मानमेव काव्यात्मतया प्रतिष्ठापयति। एवं प्रकारेण कुन्तकस्य वक्रोक्तिः कूटस्था वर्तते। यतो हि अलङ्कारसम्प्रदायो भिन्नः, वक्रोक्तिसम्प्रदायश्च भिन्न एवेति। अथवा अलङ्कारसम्प्रदायान्तर्गततत्वेनापि वक्रोक्तिरियं स्वनाम्ना पृथगेव वक्रोक्ति सम्प्रदायं प्रवर्तयति। तेनालङ्कारसम्प्रदायस्य हानिर्वा लाभो वेति विचारकैर्न विचार्यते। अलङ्कारसम्प्रदायस्यैतिह्यं तत्र विचारणीयम्।

अलङ्कारशब्दः पुरा काव्यशास्त्रस्य पर्यायतया प्रयुज्यते स्म। व्याकरणशास्त्रस्य कारणादेव काव्यशास्त्रस्य प्रादुर्भावोऽभूदिति कैश्चिदैतिह्यविद्भिरुच्यते। शब्दसंस्कारमधिकृत्य प्रवर्तमानं व्याकरणं तावदपर्याप्तमेवेति शब्दार्थसंस्कारमधिकृत्य काव्यशास्त्रं प्रावर्तत। संस्कारशब्दो व्याकरणानुगत इति काव्यशास्त्रस्य कृतेऽलङ्कारशब्दस्य प्रयोगोविहितः। तदेवं संस्कारालङ्कारशब्दौ पर्यायभूतावेव। केवलं संस्कारे पर्याप्तिमानेतुमलङ्कारशब्दस्तत्र प्रयुज्यते। व्याकरणे शब्दसंस्कारे जागृते सत्यपि यावदर्थ संस्कारोऽपि तद्वदेव न जागर्ति, तावदेकः शब्दः सम्यग्ज्ञातः सुप्रयुक्तः स्वर्गे मर्त्ये च कामधुगिति वचनं मन्येऽकिञ्चनमेव स्थास्यति। अतः शब्दार्थरूभयोरपि संस्कारणमधिकृत्य कृतं शास्त्रं काव्यशास्त्रमिति धिया संस्कारापरपर्यायस्यालङ्कारस्य शब्दार्थोभयगतत्वं भामहाचार्येण– काव्यालङ्कारे प्रत्यपादि–

रूपकादिमलङ्कारं बाह्यमाचक्षते परे।
सुपां तिङा च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्।।

तदेतादाहुः सौशब्दं नार्थव्युत्पत्तिरीदृशी।
शब्दाभिधेयालङ्कारभेदादिष्टं द्वयन्तु नः।।[२]

अत्रोद्धृतप्रथमकारिकायां शब्दैकसमर्थनपरे व्याकरणशास्त्रसिद्धान्तः पूर्वपक्षतयोपस्थापितः, द्वितीयकारिकायां शब्दार्थमयसमर्थनपरः काव्यशास्त्रसिद्धान्तश्चोत्तरपक्षतयोपस्थापितः। अथ चैतत्कारिकाद्वयोपस्थापनात्पूर्वं तत्रैव भामहीयकाव्यालङ्कारे "न कान्तमपि निर्भूषं विभाति वनिताननम्"[३] इति साकूतं यदुक्तं, तदपि तावदलङ्कारस्य वनिता सौभाग्यसूचकतया कवितायाः सौन्दर्यसाधकालङ्कारस्यापरिहार्यतामपिनिपुणमभिव्यनक्ति। तदेवं काव्यस्यालङ्कारपरत्वं शब्दार्थसाहित्यमयत्वं च भामहेन सुसाधितम्।

तत्र काव्यस्य शब्दार्थसाहित्यमयत्वे कुन्तकस्य सर्वथैव सहमतिरस्ति। "शब्दार्थौ सहितौ काव्यम्"[४] इति भामहीयकाव्यलक्षणं कुन्तको यथावदनुहरति।[५] अथ शब्दार्थयोः सहितत्वमधिकृत्य कुन्तकेन वक्रोक्तिजीविते यद्विशिष्टं वक्तव्यमुपस्थापितं, तदपि शब्दार्थमयस्य तल्लक्षणस्य चिरस्थायितां साधयति। कुन्तकस्य समर्थनेन भामहीयं शब्दार्थसाहित्यपरं तल्लक्षणं काव्यलोके तथा प्रवर्तितं यत्काव्यस्य शाब्दत्वे भृशं प्रयतमानः पण्डितराजोऽपि पराजित इव प्रतीयते। शब्दार्थयोरूभयोरपि काव्यत्वे यद्यपि आलङ्कारिकाणां सर्वे अपि वर्गा; नैकमत्यं भजन्ति तथापि कालिदासमाघसदृशानां महाकवीनामपि[६] काव्यस्य शब्दार्थमयत्वे प्रामाण्यमवलोक्य कुन्तकादयस्तत्र श्रद्धधाना:सन्ति।

भामहाभिमते काव्यस्यालङ्कारपरत्वे कुन्तकश्छलेन व्यवहरति। भामहो भरतस्य रसप्रस्थानं यथाऽलङ्कारप्रस्थानपरत्वेनैव स्वीकरोति, तथैव कुन्तकोऽपि भामहास्यालङ्कारप्रस्थानं वक्रोक्तिप्रस्थान-परत्वेनैवोपपादयति। किन्तु रसालङ्कारयोः प्रस्थानिको भेदो यथा सुस्पष्टस्तथाऽलङ्काराद्वक्रोक्तिर्न भिद्यते।

वक्रोक्त्यलङ्कारयोरेकजातित्वे सति प्राधान्याप्राधान्यमेव प्रस्थाननिर्धारणे कारणतां याति। भामहोऽलङ्कारस्य प्राधान्येनालङ्कारप्रस्थानमङ्गीकरोति, किन्तु कुन्तको वक्रोक्तिमेव प्रधानं मत्वा वक्रोक्तिप्रस्थानमुद्घोषयति। अलङ्कृतित्वे वक्रोक्तित्वे चाभेदं ब्रुवाणोऽपि कुन्तको यद्वक्रोक्तिविषयकं पक्षपातं प्रदर्शयति[७], तदेव भामहं प्रति तदीयं छलमित्युच्यते। अतिशयोक्तेरिव वक्रोक्तेः सर्वालङ्कारगतत्वं[८] कवेर्वक्राभिधानपरत्वं[९] चोल्लिख्य भामहेन यद्वक्रोक्तिबीजं काव्यालङ्कारे प्रक्षिप्तं तदेव कुन्तकस्य वक्रोक्तिः प्रस्थानतया प्रतिफलितमिति महदाश्चर्यम्। भामहो यां वक्रोक्तिमन्तर्दधानः शब्दार्थयोरलङ्कारतां ब्रूते, कुन्तकस्तामलङ्कृतिं शब्दार्थयोर्वक्रतान्तर्गतत्वेनाभिदधाति।[१०] अलङ्कारस्य लोकोत्तरसंस्कारापर-पर्यायत्वे स्वीकृते सति वक्रोक्तेरपि लोकोत्तरसंस्कारापर्यायत्वं स्वयमेव स्वीकृतं भवति। तथाऽप्यलङ्कारापेक्षया वक्रोक्तेरधिमानतायाः प्रयोजनं विचारणीयमेव तिष्ठति। सम्भवति यद्वक्रेण पथा कुन्तकोऽलङ्कारस्य महिमानमेव संवर्धयितुकामः पृथक्प्रस्थानप्रवर्तकत्वेन पुरस्कृतः स्यादिति। एवं प्रतीयते यत्कुन्तकस्य समये लोकव्यहारदशायां कविजनेषु वक्रताविषयकः कश्चिदनुचितोऽभियोगः

सुमहानापतित इति। यतो लोके वक्रतायाः प्रायशो निन्दा भवति। लौकिके व्यवहारे या वक्रता सैव कुटिलता कथ्यते। कविर्नाम वक्रवाग्भवतीति कुटिलाभिप्रायेण विरोधिभिः प्रचारितं लोकप्रवादं निराकर्तुं मन्ये कुन्तकस्तां वक्रोक्तिमेव काव्यात्मतया प्रतिष्ठाप्य विरोधिमुखमण्डनं कर्तुमैच्छदिति।[११] कुन्तकस्य सेव्यं वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी काव्यानुकूला काचिदुक्तिरस्ति। लोके वक्रता निन्दनीया स्यान्नाम, किन्तु लोकातिक्रान्तगोचरीभूता काव्यगता सैव वक्रता सर्वतोभावेनाभिनन्दनीया भवति। एतदेव हि वस्तुतः काव्यस्य काव्यत्वं यत्कविजनो वक्रेण पथा काव्ये नीरसमपि जगदिदं सरसं विदधाति तदेव काव्यगतं लोकोत्तरत्वं वक्रत्वं चेति पर्याभूतमेव।

कवीनां वक्रव्यंग्यात्तरत्वादेव काव्योचितं वैचित्र्यं लोकोत्तरत्वं वा प्रादुर्भवति। लोकाभिधानात्काव्याभिधानं सुदूरं भिद्यते। लोके यदुत्कृष्टं यच्च निकृष्टं तदुभयमपि काव्येऽपूर्वतया लोकोत्तरविधानेन व्यवस्थापितं सच्चमत्कारमेव सहृदयजनमनः सुवितनुते।[१२] तदेवमपूर्वविचित्र-चमत्कारिण्या काव्यपद्धत्या वक्रतायाः निकृष्टार्थं निषिध्य काव्यात्मतया प्रकृष्टार्थे तत्प्रयोगो विधीयते।

सारांशतया कुन्तकस्य वक्रोक्तिर्यत्र प्रसिद्धाभिधानव्यतिरेकिणी, तत्रैव प्रसिद्धप्रस्थानव्यतिरेकिणी चापि। लोके प्रसिद्धं यदभिधानं तद् द्विधा भिद्यते। तत्र लोकसामान्याभिधानं लोकव्यवहाराभिधानं वेति। प्रथमं प्रौढिवचनं शास्त्राभिधानं वेति द्वितीयम्।[१३] वक्रोक्तिस्ताभ्यां द्वाभ्यामपि लोकप्रसिद्धाभि-धानाभ्यां भिन्ना। तस्मादेव "वैदग्ध्यभङ्गीभणिति" रित्युच्यते।[१४] वैदग्ध्यं नाम कविकर्मकौशलम्। तद्वता या शब्दार्थयोरेकयोगक्षेमत्वादैक्येन व्यवहारः, यथा गौरिति शब्दः गौरित्यर्थः। अर्थात् लोकस्वाभावातिरेकेणद्वयोरपि शब्दार्थयोर्वक्रता कुन्तकेनाभिप्सिता। सा च वक्रोक्तिः रसालङ्कारादिप्रसिद्ध प्रस्थानेभ्यो भिन्ना पृथक्प्रस्थानतया प्रोक्ता। एतस्यामेव वक्रोक्तौ सर्वेपि रसाः सर्वेऽप्यलङ्कारा, सर्वेऽपि काव्यगुणाः, सर्वेऽपि काव्यमार्गाश्चापि स्वयमन्तर्भवन्ति। एतदेव हि वक्रोक्तेः कूटस्थत्वम्। एतदर्थं च तत्र रसादयो वक्रोक्तौ पुनराख्याताः भवन्ति। पुनराख्याताश्च ते रसादयो वक्रोक्तिमेव सर्वथा परिपोषयन्ति। वक्रोक्तिबन्धे तद्विदाह्लादकारित्वेन रसस्य पुनराख्यानं प्रबन्धवक्रतायां सविशेषं द्रष्टुं शक्यते। अलङ्कारतत्त्वस्य वक्रोक्तेरन्तर्गतत्वेन पुनराख्यानं मुहुः प्रदर्शितमेव। औचित्यमपि काव्यसामान्यगुणत्वेन वक्रोक्तौ स्वीकृतम्।[१५] रीतिरपि सुकुमारविचित्रमध्यमाख्यत्रिविध काव्यमार्गेषु स्वायत्तीकृता।[१६] ध्वनेश्चापि सर्वेऽपि प्रकाराः वक्रोक्तितया पुनराख्याताः वक्रतायाः प्रकारेषु यथायोग्यमन्तर्भाविताः।

ध्वनौ या व्यञ्जना, सैव वक्रोक्तौ वक्रता। वक्रोक्तेर्ध्वनेश्च बलाबलं विनिश्चेतुं समीक्षकाः काठिन्यमनुभवन्ति। केषाञ्चन समीक्षकाणां मतमस्ति यदभिनवगुप्तो यदि ध्वनिपक्षपातं नाकरिष्यत तदा ध्वनिरेष कथमपि वक्रोक्तिं विजेतुं समर्थो नाभविष्यत्।

विषयेऽस्मिन् ततोऽपि कटुतरं कैश्चिदुच्यते यदयं ध्वनिर्नाम तथाभूतो राहुरस्ति, यः खलु वक्रमपि चन्द्रमसं ग्रसति। आनन्दवर्धनः त्रिविधं शब्दव्यापारं स्वीकृत्य व्यञ्जनाव्यापारस्य प्राधान्येन

ध्वनिप्रस्थानं प्रवर्तयति। कुन्तकस्तत्र धवनिप्रस्थाने नैव श्रद्धाति। यद्दपि ध्वनेः साक्षाद्विरोधमप्यसौ न करोति, तथापि ध्वनिं तावदुपहसितुमेव वक्रोक्तिजीवितं तेन कृतमिति प्रतीयते। अत एवानन्दवर्धनेन स्वीकृताः। शब्दव्यापारबलेन ध्वनिसिद्धान्तः समुपस्थापितः तं शब्दव्यापारमेव कुन्तको न्यक्करोतीति सुमहानेव विचारणीयो विषयः। कुन्तकेन प्रेर्यमाणा एव केचिदाधुनिका अपि विद्वदपश्चिमाः शब्दस्य जडत्वमुपपादयन्ति। व्यापारश्चेतनधर्मेत्वेन कवावेव सम्भवति। अतः शास्त्रविरोधः समुदेति। यमेव शब्दं वैयाकरणा ब्रह्मत्वेन पुरस्कुर्वन्ति, स एव शब्दाः स्वस्मिन् जड इति।

किन्तु कुन्तकस्तु शब्दं जडत्वेन नाख्यायति। अपितु कुन्तकस्य या वक्रता सा शब्दव्यापारादभिन्नैव प्रतिभाति। शब्दव्यापार इव सा वक्रता अर्थव्यापारमपि क्रोडीकरोति। शब्दार्थयोर्द्वयोरपि वक्रत्वेन तयोर्द्वयोरपि व्यापारत्वमेव प्रतिफलितं भवति। एतत्पुनरन्यदेव यदिदं वक्रत्वं साक्षान्तु कविव्यापार एव, परम्परया पुनः शब्दार्थयोरपि व्यापार इति। वस्तुतो लोके या अभिधा सैव काव्ये वक्रता इति कुन्तकस्याभिमतम्। अत एव "वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा" प्रोक्ता। अभिधा नामलोके वाग्व्यापार एव। लौकिकवाग्व्यापारभूता सैवाभिधा लोकवैचक्षण्यवशात्काव्ये वक्रतेति कथ्यते।

## सन्दर्भाः

१. भामहस्य काव्यालङ्कारः २।८५

२. भामहस्य काव्यालङ्कारः १।१४-१५

३. तदेव १।१३

४. तदेव १।१६

५. शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि। बन्धे वव्यवस्थितौ काव्यं तद्विदाह्लादकारिणि। इति।
-वक्रोक्तिजीविते १।८

६. वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये।
जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ।।इति।।-रघुवंशे १।१
नालम्बते दैष्टिकतां न निषीदति पौरुषे।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते।।इति।।-शिशुपालवधे २।८८

७. उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।इति।।-वक्रोक्तिजीविते १।१०

८. सर्वत्रैवातिशयोक्तिस्तु तर्कयेदिति।-व०जी० २।८४

९. वक्रवाचां कवीनामिति।-व०जी० ६।२३

१०. वक्रोक्तेः सर्वालङ्कारमयत्वं स्वीकृत्य कुन्तकः स्वभावोक्तिं निषेधति।-व०जी० १।११

११. अभिनवगुप्तो यथा स्वस्य कृते गुरोः सर्पाभिधानं गुप्तपादत्वेन बाणभट्टश्च यथा श्रीहर्षोक्तं 'बण्ड' इत्यभिधानं बाणत्वेन स्वाम्नि स्वीकृतवाँस्थैव कुन्तकोऽपि कवीनां कृते वक्रतामुत्कृष्टार्थे प्राह।

१२. लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये।

काव्यस्यायमलङ्कारः कोऽप्यपूर्वो विधीयते।।-इति व०जी० १।२

१३. वक्रोक्तिजीविते प्रथमोन्मेषे संग्रहकारिका २, ३

१४. व०जी० १।१०

१५. तदेव १।५३

१६. तदेव १।२४

□□

# वक्रोक्तिसिद्धान्तसमालोचनम्

–रामकुमार शर्मा

अलङ्कारशास्त्रे वक्रोक्तिशब्दो मुख्यरूपेणातिशयोक्तौ, उपमाद्यलङ्कारे, उत्कृष्टघटनायाम्, अलङ्कारविशेषे, लक्षणाव्यापारे, विचित्राभिधायां च प्रयुक्तः। वक्रोक्तिपदस्येमेऽर्थाः क्रमेण भामहेन, दण्डिना, अभिनवगुप्तेन, मम्मटादिभिः, वामनेन, कुन्तकेन च कथिताः। तत्रेह प्रधानरूपेण कुन्तकस्यैवाभिमतः काव्यस्यात्मत्वेन स्वीकृतो वक्रोक्तिपदार्थोऽत्र समालोचनीयो वर्तते, प्रसङ्गतस्त्वन्येऽप्यर्था सूच्यन्ते।विचारणीया विषया इमे सन्ति–

(१) वक्रोक्तिपदार्थः,
(२) कुन्तकस्य विचित्राभिधारूपा वक्रोक्तिस्तस्याः काव्यात्मता च,
(३) वक्रोक्तेः काव्यात्मतायाः समालोचनम्।

एतत् क्रमेण विचार्यते–

**(१) वक्रोक्तिपदार्थः**–ध्वनिपदवद् वक्रोक्तेरपि पञ्चार्थाः कर्तुं शक्यन्ते–वक्रा (कुटिला लोकशास्त्रप्रसिद्धप्रतिपादनरीतिभिन्ना चमत्कारजनिका) उक्तिर्यस्मिन्निति व्युत्पत्त्या काव्यगतः शब्दः प्रसिद्धोऽर्थस्तत्समूहरूपं काव्यं चेति त्रयोऽर्थाः, वक्रा उक्तिर्यस्मै स चमत्कारी रसादिरूपोऽर्थः, वक्रा चासावुक्तिरिति व्युत्पत्त्या च विचित्राभिधारूपोऽर्थश्च। भामहेन वक्रोक्तिशब्दोऽतिशयोक्तौ प्रयुक्तः–

**सैषा सर्वत्रवक्रोक्तिरनयाऽर्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।**[१]

वक्रोक्तिपदवाच्याऽतिशयोक्तिः सर्वेषामलङ्काराणामात्मत्वेन स्वीकृता। दण्डिनाऽपि वक्रोक्त्यतिशयोक्त्योरभेदं स्वीकुर्वता लोकसीमातिवर्तिनी विशेषस्य विवक्षारूपाऽतिशयोक्तिरलङ्कार-बीजत्वेनोत्तमालङ्कृतिरभिहिता–

**विवक्षा या विशेषस्य लोकसीमातिवर्तिनी।**
**असावतिशयोक्तिः स्यादलङ्कारोत्तमा यथा।।**
**अलङ्कारान्तराणामप्येकमाहुः परायणम्।**
**वागीशमहितामुक्तिमिमामतिशयाह्वयाम्।।**[२]

आनन्दवर्धनेनापि 'सैषा सर्वत्र' इति भामहस्य वचनं व्याख्याता सर्वालङ्काराणां वक्रोक्तिपदवाच्यातिशयोक्तिगर्भता–'यतः प्रथमं तावदतिशयोक्तिगर्भा सर्वालङ्कारेषु शक्यक्रिया

कृतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्यतीति कथं ह्यतिशययोगिता स्वविषयौचित्येन क्रियमाणा सती काव्ये नोत्कर्षमाहवहेत्? भामहेनाप्यतिशयोक्तिलक्षणे..... तत्रातिशयोक्तिः यमलङ्कारमधितिष्ठति कविप्रतिभावशात् तस्य चारुत्वातिशययोगोऽन्यस्य त्वलंकारमात्रतैवेति सर्वालङ्कारशरीरस्वीकरणयोग्यत्वेन अभेदोपचारात् सैव सर्वालङ्काररूपा इयमर्थोऽवगन्तव्यः'[३] इति वचनेन प्रतिपादिता।

अभिनवगुप्तेन वक्रोक्तिपदवाच्याया अतिशयोक्तेर्महत्त्वं प्रतिपादयताऽतिशयोक्तेः पुरातनस्याप्यर्थस्य नवीनताया रसाभिव्यञ्जकतायाश्च कारणत्वम्-''याऽतिशयोक्तिर्लक्षिता सैव सर्वा वक्रोक्तिर-लङ्कारप्रकारः सर्वः। 'वक्राभिधेयवक्रोक्तिरिष्टा वाचामलंकृतिः'। इति वचनात् शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेण अवस्थानम् इत्ययमेवासौ अलङ्कारस्यालङ्कारान्तर्भावः। लोकोत्तरेण चैवातिशयः। तेनातिशयोक्तिः सर्वालङ्कार-सामान्यम्। तथाहि अनयातिशयोक्त्या अर्थः सकलजनोपभोगपुराणीकृतोऽपि विचित्रतया भाव्यते। तथा प्रमदोद्यानादिभिः विभावतां नीयते विशेषेण भाव्यते रसमयीक्रियते।''[४] इति वचनेन प्रकटितम्।

लोकशास्त्रप्रसिद्धो यः कथनस्य प्रकारस्तद्भिन्नचमत्कारिप्रकाररूपाऽतिशयोक्तिर्वक्रोक्तिपदार्थः। काव्यादर्शस्य हृदयङ्गमायां टीकायाम् 'वक्रोक्तिशब्देन उपमादयः सङ्कीर्णपर्यन्ता अलङ्कारा उच्यन्ते'[५] इति वचनेन क्वचन वक्रोक्तिपदार्थ उपमाद्यलङ्कार इति सिद्ध्यति। अभिनवगुप्तेन ध्वन्यालोके समुद्धृतस्य-

'यस्मिन्नस्ति न वस्तु किञ्चन मनःप्रह्लादि सालङ्कृति
व्युत्पन्नैः रचितं च यन्नवचनैर्वक्रोक्तिशून्यं च यत्।
काव्यं तद् ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो
नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः।।'

इति मनोरथकविश्लोकस्य व्याख्याने 'वक्रोक्तिरुत्कृष्टा घटना। तच्छून्यमिति शब्दार्थ-गुणानाम्। वक्रोक्तिशून्यशब्देन सामान्यलक्षणाभावेन सर्वालङ्काराभाव उक्त इति केचित्'[६] इति वचनेनोत्कृष्टा घटना-रचना वक्रोक्तिपदार्थत्वेनोक्ता। मम्मटादिभिः काव्यप्रकाशादौ शब्दालङ्कार-विशेषो वक्रोक्तिपदार्थ उक्तः यस्य श्लेषकाकुभ्यां द्वैविध्यं भवति। उक्तं काव्यप्रकाशे-

यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्ततो द्विधा।।

वामनेन 'सादृश्याल्लक्षणा वक्रोक्तिः'[८] इति वदता सादृश्यमूला (गौणी) लक्षणा, पश्चाद् भोजराजेन च सवामनमतेषत्परिष्कारं 'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते'[९] इत्यादिवचनेन

सामान्येन सर्वा लक्षणा वक्रोक्तिपदेन सूचिता। काव्यशास्त्रे वक्रोक्तिप्रस्थानं प्रवर्तयता भामहादिभिः स्वीकृतां विवृतां च वक्रोक्तिपदाभिधेयामतिशयोक्तिं वामनस्य लक्षणां चानुसंदधानेन–

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।**

**वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा। कीदृशी वैदग्ध्यभङ्गीभणितिः? वैदग्ध्यं विदग्धभावः कविकर्मकौशलं तस्य भङ्गी विच्छित्तिः, तया भणितिः विचित्रैवाभिधा वक्रोक्तिरित्युच्यते।**'[१०] इति व्याहरता च कुन्तकेन विचित्राऽभिधा वक्रोक्तिपदार्थत्वेन स्वीकृता काव्यजीवितपदे स्थापिता च। एवमिह प्रमुखा वक्रोक्तिपदार्थाः सूचिता इदानीमग्रिमो विषयः स्पृश्यते।

**(२) कुन्तकस्य विचित्राभिधारूपा वक्रोक्तिस्तस्याः काव्यात्मता च** अभिधा नाम सामान्येन शास्त्रान्तरेऽपि प्रसिद्धः सङ्केतितार्थविषयः शब्दगतो व्यापारः। स शब्दार्थयोर्वाच्यवाचकभाव-सम्बन्धरूपः, वाचकत्वरूप इच्छारूपोवेत्यन्यत्। एषा प्रसिद्धाऽभिधा न वक्रोक्तिःपदवाच्या। कुन्तकेन हि 'विचित्राऽभिधा वक्रोक्ति' इति लक्षणे विचित्रपदं प्रयुक्तम्। अभिधायामस्यां वैचित्र्यं नाम किमिति प्रश्ने सति किमुत्तरमिति विचारणीयं वर्तते। तत्र वक्रोक्तिपदार्थघटकीभूतायाम् अभिधायां वैचित्र्यं नाम प्रसिद्धाभिधाविलक्षणत्वमेवेति वक्तुं शक्यते। तच्च शब्दगतं विवक्षितमात्रस्यार्थस्य बोधकत्वमेवेति पर्यवस्यति। विवक्षितार्थमात्रबोधकत्वरूपो विचित्राभिधापदबोध्यो व्यापारो वक्रोक्तिरिति फलति। इदं कुन्तकस्य–

**'शब्दो विक्षितैकार्थवाचकोऽन्येषु सत्स्वपि।'**[११]

इति कुन्तकस्य शब्दलक्षणेन सिद्धयति। यथैषा विचित्राऽभिधा बीभत्सस्य प्रकरणे कपालिपद एव भवति, न तु पिनाक्यादिपदे। कपालिपदं हि कपालधारणनिमित्तिं जुगुप्सनीयमेव शिवं बोधयतीति तत्र विवक्षितजुगुप्सनीयशिवार्थमात्रस्य बोधकत्वं वर्तते। एषा विचित्राभिधा लक्षणां व्यञ्जनां चाप्यात्मसात् करोति। इदं कुन्तकस्य '**ननु द्योतकव्यञ्जकावपि शब्दौ सम्भवतः, तदसंग्रहान्नातिव्याप्तिः, यस्मादर्थप्रतीतिकारित्वसामान्यादुपचारात्तावपि वाचकावेव। एवं द्योत्यव्यङ्ग्ययोरर्थयोः प्रत्येयत्वसामान्याद् उपचाराद् वाच्यत्वमेव।**'[१२] इति कथनेन स्पष्टम्। इह द्योतकव्यञ्जकयोर्भेदं मनुते, न तु ध्वनिकारवद् अभेदम्। एवं द्योत्यव्यङ्ग्यार्थविषयेऽपि वक्तुं शक्यते। मन्ये कुन्तकमते वाच्यार्थशून्या अनु-प्र-परादयः शब्दाः वैयाकरणमताभिप्रायेण द्योतकपदेनोच्यन्ते, सद्वाच्यार्था अर्थान्तरस्य व्यञ्जनया प्रकाशकाश्च व्यञ्जकपदेन। वैयाकरणा ह्युपसर्गादीन् द्योतकान् मन्यन्ते। तन्मते धातुरेव विवक्षितस्य सर्वस्यार्थस्य वाचकः। तस्यैव नानार्थेषु प्रसिद्धाऽप्रसिद्धा वा शक्तिः। यथा भूधातोः सत्तारूपेऽर्थे प्रसिद्धा शक्तिः, पदान्तरस्य समभिव्याहारं विनैव भूधातोः सत्तार्थस्य हि प्रतीतिः, किन्त्वनुभवरूपेऽर्थेऽप्रसिद्धाः शक्ति, अनूपसर्गस्य समभिव्याहारे

सत्येव हि भूधातुना 'अनुभवति' इत्यादावनुभवार्थस्य प्रतीतिः। अनुरत्र भूधातोरनुभवे वर्तमानामप्रसिद्धां शक्तिम् उद्बोधयति। स्वसमभिव्याहृतपदनिष्ठशक्त्युद्बोधकत्वरूपं द्योतकत्वं ह्युपसर्गादौ स्वीकृतम्। प्रादिषु स्वसमभिव्याहृतपदगतशक्त्युद्बोधनद्वाराऽर्थप्रत्यायकत्वं वर्तत इत्यर्थप्रत्यायकत्वसामान्येन वाचकतुल्या द्योतकः अपि वाचका एव, एवं स्वज्ञानेन स्ववाच्यार्थज्ञानेन चार्थान्तरस्य प्रत्यायका व्यञ्जका अपि शब्दा अर्थप्रत्यायकत्वसामान्येन वाचका एवोच्यन्ते। अथवा यदि स्वसमभिव्याहृते शब्देऽप्रसिद्धशक्तिरूपाया लक्षणाया उद्बोधकत्वेन प्रादयोऽन्ये वा लाक्षणिका उच्यन्ते तदा लाक्षणिकानामपि वाचकेष्वेवोक्तरीत्याऽन्तर्भावः। 'गङ्गायां घोषः' इत्यादावनुपपद्यमानं घोषनिरूपितं प्रवाहगतत्वेनावबुध्यमानमधिकरणत्वं गङ्गापदस्य तटविषयामप्रसिद्धां शक्तिमुल्लासयतीत्यपि शाब्दिकसरणौ प्रसिद्धमेव। एवं द्योत्यस्य लक्ष्यस्य व्यङ्ग्यस्य च प्रत्येयत्वसामान्येन वाच्य एव कुन्तकमते प्रवेशः। एवं वाचकमात्रस्य वाच्यमात्रस्य च स्वीकारेण कुन्तकस्य विचित्राऽभिधारूपायां वक्रोक्तौ लक्षणाया कथितद्योतकत्वस्य व्यञ्जकत्वस्य च प्रवेशः। एवं कुन्तको विचित्राभिधावाद्याचार्यः। मुख्यार्थवाधाद्यभावेऽपि प्रवर्तमानत्वेन विचित्राऽभिधारूपा वक्रोक्तिर्विशुद्धा लक्षणेति वक्तुं न शक्यते। कुन्तकस्य विचित्राभिधायां न केवलं प्रसिद्धाभिधात्वं नापि च तच्छून्यत्वम्, अपितु तस्यां लोकशास्त्रप्रसिद्धेरतिशयस्य च योगः। लोकशास्त्रप्रसिद्धायामेवाभिधायामामतिशयस्योल्लासः। अतिशययोग एव लोकशास्त्रप्रसिद्धाया अभिधाया वैचित्र्यमिति शक्यते वक्तुम्। प्रसिद्धाभिधा यदि वैचित्र्यस्याधिकरणत्वेन स्वीकृता न स्यात् तदाऽसतामप्यश्वविषाणादीनां गोपदेन वनोपवनादीनां च वर्णने काव्यत्वमङ्गीकृतं भवेत्। अभिधायां वैचित्र्यस्यानङ्गीकारे त्वितिहासादावपि काव्यत्वं स्वीकार्यं भवेत्। अतो मध्यं मार्गमवलम्बमानः कुन्तको न केवलां निर्विशेषणामभिधां वक्रोक्तिं वदति, नापि च निराधारमतिशयोक्तिरूपं वैचित्र्यमेव, अपित्वभिधावैचित्र्ययोः समाहारं वक्रोक्तिं वदति। अस्य वक्रोक्तिरेवं तत्त्वनिर्मितरूपा वर्तते। अभिधाया प्रसिद्धिस्तत्त्वं वैचित्र्यं च निर्मितिर्वर्तते। एवं काव्ये निराधारस्यैव यथार्थस्यैव वाऽभिधानस्य नावकाशः। एवं कुन्तकस्य वक्रोक्तिस्तत्वनिर्मितिरूपा विचित्राऽभिधा विद्यते। इदं कुन्तकस्य–

यथातत्त्वं विवेच्यन्ते भावास्त्रैलोक्यवर्तिनः।  
यदि तन्नाद्भुतं नाम दैवरक्ता हि किंशुकाः।।  
स्वमनीषिकयैवाथ तत्त्वं तेषां यथारुचि।  
स्थाप्यते प्रौढिमात्रं तत् परमार्थो न तादृशः।।  
इत्यसत्तर्कसन्दर्भे स्वतन्त्रेऽप्यकृतादरः।  
साहित्यार्थसुधासिन्धोः सारमुन्मीलयाम्यहम्।।  
येन द्वितयमप्येतत् तत्त्वनिर्मितिलक्षणम्।  
तद्विदामद्भुतामोदचमत्कारं विधास्यति।।[१३]

एषा विचित्राऽभिधारूपा वक्रोक्तिरेव शब्दार्थरूपस्य काव्यस्य जीवितम्। अस्या अभावे शब्दार्थयोः

काव्यव्यवहार एव न सम्भवति। यतः सालङ्कारयोरेव शब्दार्थयोः काव्यपदेन मुख्यो व्यवहारोऽलङ्कारश्च सा वक्रोक्तिरेव। उक्तम्-

अलङ्कृतिरलङ्कार्यमपोद्धृत्य विवेच्यते।
तदुपायतया तत्त्वं सालङ्कारस्य काव्यता।।
उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।[१४]

अत एव स्वभावोक्तेरलङ्कारता निराकृता। काव्यजीवितभूता विचित्राभिधारूपा वक्रोक्तिर्मुख्यतः षोढा = पदपूर्वार्धगता, पदपरार्धगता, पदगता, वाक्यगता, प्रकरणगता, प्रबन्धगता च। तत्राद्या प्रकृतिगता, द्वितीया प्रत्ययगता च वक्तुं शक्यते। उक्तम्-

कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षट्।
प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशोभिनः।।[१५]

अस्या षट्प्रकाराया वक्रोक्तेः काव्यत्वमनेनापि श्लोकद्वयेन ध्वनितम्-

शरीरं जीवितेनेव स्फुरितेनेव जीवितम्।
विना निर्जीवतां येन वाक्यं याति विपश्चिताम्।।
यस्मात् किमपि सौभाग्यं तद्विदामेव गोचरम्।
सरस्वती समभ्येति तदिदानीं विचार्यते।।[१६]

एवं वक्रोक्तेः स्वरूपं तस्याः काव्यात्मतां च यथाकुन्तकवचनं प्रतिपाद्यास्याः काव्यात्मता समालोच्यते-

## (१) वक्रोक्तेः काव्यात्मतायाः समालोचनम्

वक्रोक्तिर्व्यापारविशेषरूपा। व्यापारो विषयं विना निरूपयितुं न शक्यत इति वक्रोक्तेः शब्दार्थाधीनत्वेन काव्यात्मता न संभवतीति रुय्यकेन **'वक्रोक्तिजीवितकारः पुनर्वैदग्ध्यभङ्गीभणितिस्वभावां बहुविधां वक्रोक्तिमेव प्राधान्यात् काव्यजीवितमुक्तवान्। व्यापारस्य प्राधान्यं च काव्यस्य प्रतिपेदे। अभिधानप्रकारविशेषा एव चालङ्काराः। ....व्यापारस्य विषयमुखेन प्रतिलम्भात् तत्प्रधान्येन प्राधान्यात् स्वरूपेणैव विदितत्वाभावाद् विषयस्यैव समग्रभरसहिष्णुत्वम्।'**[१७] इत्यादिवचनेन स्फुटमभिहितम्। सहृदयहृदयस्य विश्रान्तेः स्थानं क्वचन शब्दो भवति क्वचन चार्थः, न तु कुत्रापि व्यापाररूपा वक्रोक्तिः। वक्रोक्तिश्चमत्कृतेः साधनमिति कथं काव्यात्मपदमारोढुमर्हा? शास्त्रान्तरप्रसिद्धाया अभिधायाः काव्यगतायामभिधायां वैचित्र्यं नाम किमिति विचारे कृते तद् वैचित्र्यं नामौचित्यं प्रतीयमानाभिव्यञ्जकत्वमेव वा फलितं भवति।

तेनौचित्यं व्यञ्जकत्वं वा काव्यजीवितमिति पर्यवस्यति। तत्रौचित्यं काव्यनिरूपणसामर्थ्यसिद्धमिति पृथक्त्वेन तन्नोपादेयम्। व्यञ्जकत्वं यदि वक्रोक्तिरुच्यते तदा तु न किमपि नवीनं तथ्यं प्रकाशितं भवति। व्यञ्जकत्वस्यैव वक्रोक्तिरिति नामान्तरस्य करणे किमौचित्यम? इदं व्यक्तिविवेक एवमभिहितम्–

**यतः प्रसिद्धोनिबन्धनव्यतिरेकित्वमिदं शब्दार्थयोरौचित्यमात्रपर्यवसायि स्यात्, प्रसिद्धाभिधेयार्थव्यतिरेकि प्रतीयमानाभिव्यक्तिपरं वा स्यात्।... तत्राद्यस्तावत् पक्षो न शङ्कनीय एव, तस्य काव्यस्वरूपनिरूपणसामर्थ्यसिद्धस्य पृथगुपादानवैयर्थ्यात्। विभावाद्युपनिबन्ध एव हि कविव्यापारः, नापरः। ते च यथाशास्त्रमुपनिबद्ध्यमाना रसाभिव्यक्तेर्निबन्धनभावं भजन्ते, नान्यथा। रसात्मकं च काव्यमिति कुतस्तत्रानौचित्य-संस्पर्शः सम्भाव्यते, यन्निरासारार्थमित्थं काव्यलक्षणमित्थम् आचक्षीरन् विचक्षणम्मन्याः। द्वितीयपक्षपरिग्रहे पुनर्ध्वनेरेवेदं लक्षणमनया भङ्ग्याऽभिहितं भवति, अभिन्नत्वाद् वस्तुनः। अत एव चास्य त एव प्रभेदास्तान्येवोदाहरणानि तैरुपदर्शितानि।**[१८]

महिमभट्टस्यभेदं कथनं सर्वथा समीचीनं यत् क्वचन प्रतिपादनप्रकारस्य भेदेऽपि ध्वनिसिद्धान्त एव वक्रोक्तिपदेन प्रतिपादितः। आनन्दवर्धनेन–

**सोऽर्थस्तद्व्यक्तिसामर्थ्ययोगी शब्दश्च कश्चन।**
**यत्नतः प्रत्यभिज्ञेयौ तौ शब्दार्थौ महाकवेः।।**[१९]

इति कथनेन ध्वनितमेव यत् काव्ये विवक्षितार्थव्यञ्जकत्वमेव शब्दस्य लक्षणम्। मन्ये विचित्राभिधारूपवक्रोक्तिवादिना कुन्तकेन ध्वनिकृतस्तमभिप्रायं गृहीत्वा व्यञ्जकस्थाने वाचकपदं प्रयुज्य '**शब्दो विवक्षितैकार्थवाचकोऽन्येषु सत्स्वपि**' इति शब्दस्य लक्षणं विहितम्। ध्वनिकृता '**यत्रार्थः शब्दो वा**' इत्यादौ ध्वनिलक्षणे व्यञ्जकस्यार्थस्योपसर्जनीकृतस्वत्वरूपेण विशेषणेन व्यञ्जकेऽर्थे चमत्कारिस्वभावस्य सद्भावो ध्वनित एव। अन्यथा तत्र विवक्षितरसाभिव्यञ्जकत्वं न स्यात्। यथोन्नतस्तनविशिष्टा नायिका शृङ्गारस्य व्यञ्जकत्वेन शृङ्गारस्य प्रसङ्गेऽर्थो भवति, न तु पतितस्तनविशिष्टा। एवं नायिकाया उन्नतस्तनत्वरूपः परिस्पन्दः = स्वभावः शृङ्गारस्य प्रसङ्गे चमत्कारीति ध्वनितमेव ध्वनिकृता। ध्वनिकृतोऽमुमेवाभिप्रायं गृहीत्वा कुन्तकेन '**अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः**' इत्यर्थस्य लक्षणं विहितम्।

यद्यपि कुन्तको विचित्रेति विशेषणस्य प्रयोगेण काव्यगतमभिधाव्यापारं प्रसिद्धशब्दव्यापाराद् विविनक्ति तथापि तस्य विचित्रव्यापरस्य कृते लक्षणां व्यञ्जनां वा न प्रयुज्याभिधापदमेव यत् प्रयुङ्क्ते तत्र मूलं ध्वनिविरोधः। अभिधापदस्यैव प्रयोगः कुन्तकं ध्वनिविरोधिषु स्थापयति, शेषाः सिद्धान्तास्तु क्वचन नाममात्रभिन्नाः समाना एव। यदि कश्चन शोधार्थी कुमारसम्भवस्य

वक्रोक्तिसिद्धान्तमवलम्ब्य शोधं विद्ध्यात् तदा तेन कपालिपदे पदपूर्वार्द्धवक्रतेति पदं प्रयोज्यम्, पुनरपरो यदि ध्वनिसिद्धान्तमाश्रित्य शोधं कुर्यात् तदा तेन प्रकृतिव्यञ्जकतेति पदं प्रयोज्यम्। एवमिह केवलः शब्दस्य भेदः, न त्वर्थस्य। एवं ध्वनिसिद्धान्ते यद् व्यञ्जकत्वं तदेवेह वक्रोक्तिः। ध्वनिसिद्धान्ते स्वीकृतेषु पञ्चस्वर्थेषु व्यञ्जनाव्यापाररूपो योऽर्थस्तस्य वक्रोक्तिनाम विधाय काव्यात्मताऽभिहितेत्यपि तर्कितुं शक्यते। एवं स्थितेऽपि वर्तत ईषद् भेदः। ध्वनिसिद्धान्ते ध्वनिपदवाच्यं व्यञ्जकत्वं काव्यात्मतया नाभिप्रेतम्, अपितु ध्वनिपदवाच्यं प्रतीयमानमेव तत्रापि च पर्यवसाने रसरूपमेव। कुन्तकस्तु भावकत्वभोजकत्वरूपव्यापारप्राधान्यवादिनं भट्टनायकमनुगच्छन् वक्रोक्तिरूपं व्यापारमेव काव्यस्य जीवितं मनुते। व्यापरस्य काव्यात्मता कथं नेति पूर्वं प्रतिपादितमेव। वक्रोक्तौ लक्षणाऽपि समाविष्टा, व्यञ्जकत्वं तु ततो भिन्नमेव। समासेनैवं वक्तुं शक्यते यद् अलङ्कारप्रस्थाने या वक्रोक्तिरलङ्कारस्यात्माऽभिहिता सा कुन्तकेन काव्यात्मपदे प्रतिष्ठापिता, अस्याः कुक्षौ लक्षणा व्यञ्जना चापि प्रवेशिता। एवं वक्रोक्तिपदस्यार्थे विस्तारो विहितः। वक्रोक्तिसिद्धान्तोऽलङ्कारप्रस्थानस्य ध्वनिप्रस्थानस्य च संयुक्तं स्वरूपं नृसिंहायमानम्। वक्रोक्तेरेव काव्यात्मत्वे स्वभावोक्तिप्रधानानां विविधमहाकविकृतानां कपिमृगबालविलसितादिवर्णनानां काव्यत्वमकाव्यत्वं वेति विचारणीयं विपश्चिदपश्चिमैः। दण्डिना स्वभावोक्तिवक्रोक्तिनाम्ना द्विधा, भोजेन स्वभावोक्तिवक्रोक्तिरसोक्तिनाम्ना त्रिधा च वाङ्मयं विभक्तम्। एवं स्थितेऽपि सरसप्रसन्नभाषाप्रयोगे वक्रोक्तिपदार्थपरिष्कारे कविस्वभावाधारेण सुकुमारादिमार्गत्रयस्य व्यवस्थापने,मार्गगुणविवेचनेऽलङ्कारशास्त्रे वक्रोक्तिप्रस्थानस्य प्रतिष्ठापने च कुन्तकस्यावदानमविस्मरणीयमिति शम।

## सन्दर्भाः

१. ध्वन्यालोकः, पृ० ४९९–आचार्य जगन्नाथपाठकः, चौखम्बा विद्याभवन, वाराणसी, २०११ ई०
२. काव्यात्ममीमांसा, पृ० २३२–डॉ० जयमन्त मिश्रः, चौखम्बा विद्याभवन, वाराणसी, १९६४ ई०
३. ध्वन्यालोकः, पृ० ४९८-५०१–आचार्य जगन्नाथपाठकः, चौखम्बा विद्याभवन, वाराणसी, २०११ ई०
४. ध्वन्यालोके, पृ० ४९९-५००-लोचने–आचार्य जगन्नाथपाठकः, चौखम्बा विद्याभवन, वाराणसी, २०११ ई०
५. ध्वन्यालोकः, पृ० २९–आचार्य जगन्नाथपाठकः, चौखम्बा विद्याभवन, वाराणसी, २०११ ई०
६. तत्रैव लोचने, पृ० २९–३०
७. काव्यप्रकाशः, उल्लासः ९
८. काव्यालङ्कारसूत्रम् ४।३।८
९. काव्यात्ममीमांसा, पृ० २३६
१०. वक्रोक्तिजीवितम्, पृ० ४७–४८, चौखम्बा संस्कृत संस्थान, वाराणसी, १९८३ ई०
११. तत्रैव, पृ० ३४
१२. तत्रैव, पृ० ३४
१३. वक्रोक्तिजीवितम्, पृ० ३–४

१४. तत्रैव, पृ० १३, ४७

१५. तत्रैव, पृं० ६२

१६. तत्रैव, पृ० ६१-६२

१७. अलङ्कारसर्वस्वम्, पृ० ८-११, रा०सं० संस्थानम्, नव देहली, २००० ई०

१८. व्यक्तिविवेकः, पृ० १४२–आचार्यरेवाप्रसादद्विवेदी, चौखम्बा संस्कृतसंस्थान, वाराणसी, २००५ ई०

१९. ध्वन्यालोकः, पृ० ९७



# वक्रोक्तिविमर्शः

–प्रो० कौशलेन्द्रपाण्डेयः

संस्कृतसाहित्यशास्त्रपरम्परायां कुन्तकाचार्यः वक्रोक्तिसिद्धान्तस्य प्रतिष्ठापकाचार्यत्वेन समादृतोऽस्ति। संस्कृतसाहित्यशास्त्रसमृद्धावस्यापि महदवदानं विद्यते इति स्वीकुर्वन्ति सहृदयाः विद्वांसः। कुन्तकाचार्यतः प्राक् रसालङ्काररीतिध्वनिप्रस्थानां न केवलं स्थापनं तत्तप्रस्थानप्रवर्तकैराचार्यैः कृतमासीत्, अपितु सर्वेषामेव प्रचारोऽपि सम्यक्तया आसीदिति प्रतीयते। यद्यपि 'वक्रोक्तिरित्यस्य काव्योपकारकत्वं प्रथममेवाङ्गीकृतमाचार्यैः तथापि इतीदमेवाभिधानं स्वीकृत्य किमपि नवीनं काव्यात्मतत्त्वं प्रवर्तितं कुन्तकाचार्येण। अत इत्यत्रविषये वक्तुं शक्यते यत् वक्रोक्तिरितिमुखेन कुन्तकाचार्यः काव्यतत्त्वानां काव्यात्मभूतस्य च तत्त्वस्योपस्थापनं नूतनेनैव प्रकारेण कृतवानिति। किञ्च केषाञ्चित् काव्यतत्त्वानां विषये नवीनमिवोद्भावयति, केषाञ्चिच्च काव्यतत्त्वानां विषये प्राचीनानां मतं निरस्य स्वीयं मतं सव्याख्यानं प्रस्तौति। वक्रोक्तिजीवितम् ति ग्रन्थविषये एतत्कथनं समीचीनमेव भाति यदसौ कुन्तकाचार्यः काव्यं तच्छास्त्रं च यथापरम्परं शास्त्रदृष्ट्या सह व्यवहारदृष्ट्याऽपि विचिन्त्य प्रस्तौति। अस्य विषये एतद् वक्तुं शक्यते यत् वक्रोक्तिनिरूपणमुखेन यत्रकुत्रचित् प्राचीनाचार्यैः सहास्य विरोधः प्रतीयते, किन्तु यथार्थतः नास्त्येवास्य विरोधिस्वभावः। अत्र एवमपि वक्तुं शक्यते यत् कुन्तकः नास्ति ध्वनिविरोधी न च रसविरोधी। अपितु एतदवश्यमेव कुत्रचित् प्रतिभाति यदयं प्रकारान्तरेण व्यङ्ग्यार्थमङ्गीकरोति। रसस्यापि चूडामणित्वं सादरं स्वीकरोति। किन्तु अनेनैव सह एतदपि स्थापयत्येव यत् रसादीनां मूले वक्रोक्तिरेव तत्कारणं माध्यमं वा येन काव्यं सहृदयहृदयावर्जकत्वामावहति। अतः वक्रोक्तेरेव प्राथम्यं, किञ्च वक्रोक्तिरेवसारभूतं काव्यतत्त्वमित्यभिप्रायः प्रतीयते वक्रोक्तिजीवितमिति ग्रन्थनिर्माणे। यद्यपि कुन्तकेन ध्वनिकारस्य कुत्रापि स्पष्टतया नाम न गृहीतं, किन्तु आनन्दवर्धनस्य नैकाः कारिकाः, सिद्धान्तवचनानि, उदाहरणानि च सदभिप्रायेणैव निर्दिष्टानि सन्ति। अत इत्थं दृढं प्रतिभाति कुन्तकः ध्वनिविरोधी नास्ति। किञ्चासौ कुन्तकाचार्यः वक्रोक्तिजीवितस्य तृतीयोन्मेषे–

प्राप्तश्रीरेष कस्मात् पुनरपि मयि तं मन्थखेदं विदध्यान्
निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः।।[१]

इत्यादिपद्यं व्यतिरेकध्वनेरुदाहरणरूपेण प्रस्तौति। ध्वन्यालोकलोचने एतत् पद्यं वर्तते। वक्रोक्तिजीविते तु–'अत्र वर्ण्यमानस्य नारायणत्वसमारोपं विना तदारम्भसंभावना न संभवतीति तस्य तत्त्वाध्यारोपणात् प्रतीयमानतया रूपकमेव पूर्वसूरिभिः समाम्नातम्, वाच्यव्यतिरेकः तत्कथमस्योपपद्यते। सत्यमुक्तम्, किन्तु युक्तिरत्राभिधीयते तस्माद् द्विविधं प्रतीयमानं वस्तु,

प्रतिपादनगुणीभूतस्वार्थवाचकव्यापारगोचरः, तथाविधार्थसामर्थ्यविषयो वा। तत्र वाचकमुपमानमित्यालोच्य विवक्षितार्थोपपत्तिनिमित्तं वाच्यसामर्थ्यमेव समाश्रित्य पूर्वसूरिभिरेतदाम्नातम्। वाचकव्यापारः पुनरन्यथैव व्यवस्थितः। तथा च प्राप्तश्रीप्रभृतीनि पदानि आक्षिप्तप्रतियोगितयोपनिबद्धानि, प्रस्तुतस्य प्राक्तनपरिस्पन्दविशिष्टतरदेवात्वप्रतिपादकपराणि प्रकटमेव रूपकव्यतिरेकं गमयन्ति।" लोचने इत्यस्य व्याख्यानमेवं विद्यते–'यद्यपि चात्र व्यतिरेको भाति तथापि स पूर्ववासुदेवस्वरूपात्, नाद्यतनात्' इति।[२]

एवमेव कुन्तकविषये अपरोऽप्येकः विशेषः दृश्यते, स तु वर्तते 'कविव्यापारलक्षण'। काव्ये कर्मणि वा 'व्यापार' इत्यमुं भट्टनायकः प्रधानत्वेनाङ्गीकरोति, (अयं तु प्रथम आचार्यः)। एतद्दृशा तु अभिधाव्यापारानन्तरं भावकत्वव्यापारः काव्यव्यापारः, किन्तु कुन्तकस्य व्यापारः कविव्यापारः, स चैव प्राधान्येन भवति। अत्रेदमवधेयं यत् प्राचीनैर्यथोक्तम्–'रीतिरात्मा काव्यस्य, काव्यस्यात्मा ध्वनि'रित्यादिः, तेन काव्ये भवति किमपि प्रधानं तत्त्वमित्येवं सूच्यते। रीतिः, ध्वनिः, अलङ्कारः, रसो वा एते काव्ये प्रधानतया भवितुमर्हन्ति, अत ऐते काव्ये आलङ्कारिकैराचार्यैं प्राणतत्त्वरूपेणाङ्गीकृताः सन्ति। एवं प्रकारेण काव्यक्षेत्रं कमपि तत्त्वविशेषमङ्गीकृत्य "प्राधान्यवादः" स्वीकृत 'आत्मा' इति मुखेन। कुन्तकदृशा तु अयं प्राधान्यवादः कविव्यापारमुखेन निर्दिष्टः। कविव्यापारस्यात्मतत्त्वं यत् भवति तत् 'वक्रोक्तिरिति नाम्ना वक्रोक्तिकारेण निर्दिश्यते। एतत् तु तथैवास्ति, यथा–'काव्यस्यात्मा ध्वनिः, ध्वनेरात्मा रस" इत्यस्ति। अतः अनया रीत्या वक्तुं शक्यते–काव्यस्यात्मा कविव्यापारः, कविव्यापारस्यात्मा प्राणतत्त्वं वा वक्रोक्तिरिति। अत एव साहित्यदर्पणकारेण–वक्रोक्तिः काव्यजीवितम्' इति निगदितम्। किन्तु इत्यतेनैव सह एतदपि भवति ध्यातव्यं यत् कुन्तकस्य वक्रोक्तिः तथा नास्ति यथा भामहाचार्यस्य वक्रोक्तिः। उक्तं यथा भामहेन काव्यालङ्कारे–

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।[३]

अत्रायमाशयः यत्, अलङ्कारो हि नाम चमत्कृतिः काव्यविच्छित्तिर्वा, तत्र तु कारणमेकमेव वक्रोक्तिः। अतः वक्रोक्तिरिति कस्याप्यलङ्कारविशेषस्याभिधानं नास्ति, अपितु अलङ्कारसामान्यनिष्ठ–काव्योपकारकसौन्दर्यस्य पर्यायभूतास्ति। अतएव कविभिरत्र प्रयत्नः कार्य इति सङ्केतितः। कथितमपि यथा काव्यालङ्कारे–"वक्राभिधेयशब्दोक्तिरिष्टा वाचामलंकृतिः", इति। अन्यत्रापि तत्रैव काव्यालङ्कारे अयमेवाभिप्रायः प्रकारान्तरेण वर्तते–'वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते। इति। इत्थं भामहाचार्यमते 'शब्दार्थगतसौन्दर्यमेव वक्रोक्तिः, यत्र अलङ्काराः कल्प्यन्ते। दण्डिनापि किञ्चिदेवमेव स्वीक्रियते किन्तु तत्र भेदोऽयं वर्तते यत्–स्वभावोक्ति वक्रोक्तिश्चेत्याभ्यां सम्पूर्णं वाङ्मयं द्विधा भिन्नं भवति। कथितं यथा काव्यादर्शे–'द्विधा भिन्नं स्वभावोक्तिः वक्रोक्तिश्चेति वाङ्मयम्।' अतः वक्रोक्तिरिति कस्याप्लङ्कारविशेषस्याभिधानं न, अपितु–वक्रोक्तिशब्देन उपमादयः अलङ्कारा उच्यन्ते।

काव्यादर्शे वाङ्मयस्य प्रथमरूपे स्वभावोक्तौ–स्वभावरूपाः अलङ्कारविशेषाः हेतुः, सूक्ष्मं, लेशप्रभृतयोऽलङ्काराः स्वीक्रियन्ते, उपमादयस्तु वक्रोक्तिरूपाः। रसवदलङ्कारेषु रसस्याप्यन्तर्भावः। उक्तं चापि काव्यादर्शे–वक्रोक्तौ शोभाहेतुः भवति श्लेषः। यथा–'श्लेषः सर्वासु पुष्णाति प्रायः वक्रोक्तिषु श्रियम्'' इति। एवमेव वामनाचार्येण वक्रोक्तेः स्वरूपं सर्वथैव भिन्नमङ्गीकृतम्। केनाप्यलङ्कारिकाचार्येण तस्यानुसरणमनुमोदनं वा न कृतम्। काव्यालङ्कारसूत्रग्रन्थे–'सादृश्याल्लक्षणा वक्रोक्तिः' इति लक्षणेन वक्रोक्तिः, अर्थालङ्कारमात्रमेवेति। इत्थं कुन्तकस्य या वक्रोक्ति तया सह वामनस्य वक्रोक्तेः कोऽपि सम्बन्धः नास्ति, इत्येवं कथनं समीचीनं भाति। रुद्रटाचार्यमते तु–वक्रोक्तिः शब्दालङ्कारविशेषः। उक्तं यथा–

**वक्ता तदन्यथोक्तं व्याचष्टे चान्यथा तदुत्तरतः।**
**वचनं यत्पदमङ्गैर्ज्ञेया सा श्लेषवक्रोक्तिः।।**[४]

परिवर्तिभिः कैश्चिदालङ्कारिकैचारार्यैरनुसृतोऽसौ रुद्रटाचार्य इति दृश्यते। आनन्दवर्धनाचार्यस्तु भामहमेवानुसरतीति वक्तुं शक्यते। भामहाचार्याभिमतं यदस्ति अतिशयकथनं येन काव्यं शास्त्रेभ्यः पृथक्क्रियते, यच्चैव वक्रोक्तिरिति, तदेवातिशयत्वं ध्वनिकारेणाङ्गीकृतमिव प्रतीयते। यथा–यतःप्रथमं तावदतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया। कृतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्यति। कथं ह्यतिशययोगिता स्वविषयौचित्येन क्रियमाणा सती काव्ये नोत्कर्षमावहेत।[५]

अस्मिन्नेव क्रमे, एतदपि विलोकनीयं भवति–'तत्रातिशयोक्तिर्यमलङ्कारमधितिष्ठिति कविप्रतिभावशात्तस्य चारुत्वातिशयोगः, अन्यस्य त्वलङ्कारमात्रतैवेति सर्वालङ्कारशरीरस्वीकरणयोग्यत्वेनाभेदोपचारात् सैव सर्वालङ्काररूपेत्ययमेवार्थोऽवगन्तव्यः। तस्याश्च अलङ्कारान्तरसङ्कीर्णत्वं कदाचिद् वाच्यत्वेन, कदाचिद् व्यङ्ग्यत्वेन। व्यङ्गत्वमपि कदाचित्प्राधान्येन कदाचिद् गुणभावेन। तत्राद्ये पक्षे वाच्यालङ्कारमार्गः। द्वितीये तु ध्वनावन्तर्भावः। तृतीये तु गुणीभूतव्यङ्ग्यरूपता।' (ध्व० ३।३६ कारिकायाः वृत्तौ)। इत्थं ध्वनिकारदिशा वक्रोक्तौ सम्पूर्णमेव काव्यसौन्दर्यं भवति, यत् अतिशयोक्तिपदेनोच्यते इति। आचार्याभिनवगुप्तोऽपि ध्वनिकारमेव पुष्णाति। यथा–"शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेणावस्थानमित्ययमेवासौ अलङ्कारस्यालङ्कारभावः, लोकोत्तरतैव चातिशयः, तेनातिशयोक्तितः सर्वालङ्कारसामान्यम्। तथा हि–अनया अतिशयोक्त्या, अर्थः सकलजनोपभोगपुराणीकृतोऽपि विचित्रतया भाव्यते, तथा प्रमदोद्यानादिः विभावतां नीयते, विशेषेण च भाव्यते रसमयी क्रियते।" (ध्व०, तृ०उ०, ३६ कारिकायाः लोचनटीकायां) इत्थमभिनवगुप्तेन वक्रोक्तिविषये यन्निगदितं तस्य कुन्तकाभिमतेन वक्रोक्तिख्यापनेन साम्यमिवाभाति। अत्रेत्थं प्रतीयते समकालिकत्वाद् कुन्तकस्य वक्रोक्तिसिद्धान्तस्य परिचयः अभिनवगुप्तपादस्य कृते आसीदिति। अत्र भोजराजस्यापि वक्रोक्तिविषयकं निरूपणं ज्ञातव्यं भवति। वक्रोक्तेः

वैशिष्ट्यमनेनाप्यङ्गीकृतं वर्तते। यथा–"कः पुनरनयो काव्यवचसोर्ध्वनितात्पर्ययोः विशेषः? ननूक्तं पुरस्तात्।[६]

**यदवक्रं वचश्शास्त्रे लोके च वच एव तत्।**
**वक्रं यदर्थवादादौ तस्य काव्यमिति स्मृतिः।।[७]**

अलङ्काराणां वक्रोक्तिमूलकता अनेनापि स्वीक्रियते। यथा–"न चैतद्वाच्यं" धूमोऽयमग्नेरित्यत्राप्यर्थान्तरन्यासः प्रसजेत्। यद्यपि धूमस्योत्पाद्यस्य साधनसमर्थोऽग्निः, तथापि 'काव्यशोभाकरान् धर्मान् अलङ्कारान् प्रचक्षते' इत्येतदपि सर्वालङ्कारसाधारणं लक्षणमनुसर्त्तव्यम्। अस्मिन् सति सर्वालङ्कारजातयो वक्रोक्त्यभिधानवाच्या भवन्ति।[८]

भोजोपरि भामहस्य प्रभाव; परिलक्ष्यते किन्तु ध्वनिमहत्त्वमपि जानाति भोजराजः, अतः यथापरम्परं सर्वमेव नाङ्गीकरोति, अपितु ध्वनिं तद्वैशिष्ट्यं च ज्ञात्वा त्रैविध्येन विभजति स्वकीये ग्रन्थे। एतत् सर्वमेव काव्यप्रपञ्चम्। यथा–त्रिविधःखल्वलङ्कारवर्गः–वक्रोक्तिः, स्वभावोक्ति, रसोक्तिरिति।

(१) तत्रोपमाद्यलङ्कारप्राधान्ये वक्रोक्तिः,
(२) श्लेषादिगुणप्राधान्ये स्वभावोक्तिः
(३) विभावानुभावव्यभिचारिसंयोगात्तु रसनिष्पत्तौ रसोक्तिरिति।[९]

काव्यप्रकाशकारमते तु वक्रोक्तिः शब्दालङ्कारेष्वेकोऽलङ्कारः। यद्यपि विशेषालङ्कारप्रसङ्गे सोऽपि वक्रोक्तेः महत्त्वं निरूपयति। "सर्वत्र एवंविधविषयेऽतिशयोक्तिरेवप्राणत्वेनावतिष्ठते। तां विना प्रायेणालङ्कारत्वायोगात् (का०प्र० १०, उ० १३६ कारिकावृत्तौ)। अत्र अतिशयोक्तिः वक्रोक्तिरेव। साहित्यदर्पणकारेण यन्निगदितं–'एतेन 'वक्रोक्तिकारोक्तमपि परास्तम्' वक्रोक्तेरलङ्काररूपत्वात्" इति समीचीनं नास्ति, यतोहि कुत्रापि कुन्तकेन नैव लिखितं–'वक्रोक्तिः काव्यजीवितम्' इति। मन्ये ग्रन्थाभिधाने साहित्यदर्पणकारस्यायं भ्रमः। इत्थं प्रायः सर्वैरेवालङ्कारिकैः वक्रोक्तिः अलङ्कार-रूपेणाङ्गीक्रियते, किन्तु कुन्तकस्य वक्रोक्तिरेवं नास्ति। यतो हि–

**लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये।**
**काव्यस्यायमलङ्कारः सोऽप्यपूर्वो विधीयते।।[१०]**

अत्र अलङ्कारस्तु वर्तते किन्तु अपूर्वः, अथ च लोकोत्तरचमत्कारकारिवैचित्र्यसिद्ध्यर्थम्, अतः भामहादिभिर्यदलङ्कारत्वमङ्गीकृतं ततोऽत्रकिञ्चिद् वैभिन्न्यमिति प्रयोजनमुखनैव सूचितम्। इत्थं वैचित्र्यसिद्धेः वक्रोक्तिरेव कारणम्। अत्रैतद्ध्यातव्यं भवति यत् लोकोत्तरचमत्कारसिद्धिरेव ग्रन्थस्य प्रयोजनम्। काव्यप्रयोजनं तु अन्यदेव। उक्तं यथा–

धर्मादिसाधनोपायः सुकुमारक्रमोदितः।
काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः।।
व्यवहारपरिस्पन्दसौन्दर्यं व्यवहारिभिः।
सत्काव्याधिगमादेव नूतनौचित्यमाप्यते।।
चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते।।[११]

अत्रैतद् पुनः स्मरणीयं भवति यत् कुन्तकस्य दृष्टिः कविव्यापारे एव प्राधान्येन वर्तते। कदाचिद् अनयैव धिया ग्रन्थस्य नामापि 'वक्रोक्तिजीवितम्' इति कृतवान्। इत्थं कुन्तकस्य "वक्रोक्तिरेव प्राणतत्त्वं काव्यस्य" इत्यभिप्राये समागते सति, ध्वनेर्विरोधः नास्त्येव। वस्तुतः काव्यस्य आत्मभूतध्वनेः काव्यप्राणवक्रोक्तिः भिन्नैव इत्युक्त्वा उभयोर्भेदः सूक्ष्मतया निर्दिष्टः। कविव्यापारदृष्ट्या एतत् समीक्षणं शोभनं प्रतिभाति। अत एव–

शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।[१२]

इति निगदितम्।

कविव्यापारदृशा, काव्यसमीक्षाक्रमे अलङ्कारसर्वस्वटीकाकर्तुः समुद्रबन्धस्य कथनमुल्लेखनीयं वर्तते। तदत्र प्रस्तूयते–इह विशिष्टौ शब्दार्थौ काव्यम्। तयोश्च वैशिष्ट्यं धर्ममुखेन, व्यापारमुखेन, व्यंग्यमुखेन वा इति त्रययः पक्षाः। आद्येऽपि अलङ्कारतो गुणतो वा इति द्वैविध्यम्। द्वितीयेऽपि भणितिवैचित्र्येण भोगीकृत्वेन वा इति द्वैविध्यमिति पञ्चसु पक्षेषु आद्य उद्भटादिभिरङ्गीकृतः, द्वितीयो वामनेन, तृतीयो वक्रोक्तिजीवितकारेण, चतुर्थो भट्टनायकेन पञ्चम आनन्दवर्धनेन च। इति।

इत्थं समुद्रबन्धदृशा भणितिवैचित्र्येण कुन्तकस्य कविव्यापारो वर्तते इति शक्यते। किन्तु भणितिवैचित्र्यभूतः कविव्यापारोऽयं कुन्तकेन अलङ्काररूपेणैव वर्ण्यते। यतो हि स्वयमेव कथयति–यद्यपि सन्ति शतशः काव्यालङ्कारास्तथापि न कुतश्चिदप्येवंविधवैचित्र्यसिद्धिः। कुन्तकधिया, अत्रायमभिप्रायः प्रतीयते यत् वैचित्र्यसिद्धेः केवलमत्र मया (कुन्तकेन) विधीयमानोऽयं वक्रोक्तिरित्याख्यः अलङ्कार एव समर्थः। उक्तं यथा–"काव्यस्यायमलङ्कारः कोऽप्यपूर्वो विधीयते।" अत्रैतदपि बोध्यं यदत्र 'अलङ्कार' इति पदेन अलङ्कारप्रतिपादकानां ग्रन्थानाम् अभिधानम् उपचारेण क्रियते, तथा तत्तद् ग्रन्थानां प्रतिपाद्यभूतानामभिधेयानां प्रमेयविषयभूतानामुपमादीनामलङ्काराणां प्राधान्येन बोधः। अत्रेयमपि कारिकोदाह्रियते, विषयविभाजनेन सह अलङ्कारवतामेव शब्दार्थानामलङ्कारतेति वक्रोक्तिकारस्य निश्चयः। तद्यथा–

अलङ्कृतिरलङ्कार्यमपोद्धृत्य विवेच्यते।
तदुपायतया तत्त्वं सालङ्कारस्य काव्यता।।[१३]

अयमत्र परमार्थः–सालङ्कारस्य अलङ्करणसहितस्य सकलस्य निरस्तावयवस्य सतः समुदायस्य काव्यता कविकर्मत्वम्। तेनालङ्कृतस्य काव्यत्वमिति स्थितिः, न पुनः काव्यस्यालङ्कारयोग इति।" किन्तु एवं सति नैव संशयः, यतो हि वैचित्र्यान्तरविशिष्टस्यैव काव्ये उपयोगित्वम् काव्यत्वं वा। अत एव कथितम्–

**उभावेतावलङ्कार्यौ तयो पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।**[१४]

कुन्तकस्येयं भङ्गीभणितिः वर्तते शब्दार्थयोः कापि अलौकिकी परस्परस्पर्धित्वरमणीया विन्यासभङ्गी न्यूनातिरिक्तत्वाभावस्वभावा। शब्दार्थयोः स्थितिरियं सहृदयहृदयश्लाघ्यत्वमावहन्ती कामप्यपूर्वां शोभां च प्रकटयन्ती काव्यव्यवहारदृशा साहित्यमित्यभिधानेनाद्रियते। किञ्चैष एव कविव्यापारः वक्रत्वमित्यपरपर्यायेण ग्रन्थकारेण प्रतिपाद्यते। इत्थं काव्यमार्गे या विशिष्टशब्दार्थसम्पत्तिः सैव अपूर्वा विच्छित्तिमावहति इति। एतदेव सर्व शब्दार्थयोः विशिष्टं साहित्यं तत् तत्त्वं यत्र तद्विदाह्लाकारित्वविशिष्टकविव्यापारः प्रस्फुटति, अतएवोक्तं–"**शब्दार्थौ सहितौ वक्रकविव्यापार-शालिनि। बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।**" इति। वस्तुतः असौ वक्रकविव्यापारः शब्दार्थयोः साहित्ये एव भवति इति ग्रन्थकारस्याभिप्रायः, यतोहि काव्यमार्गे शब्दोऽपि विशिष्टस्तथार्थो-ऽपि विशिष्ट एव। विशिष्टमेवानयोः साहित्यमपि। अतएव–(क) शब्दोविवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि। (ख) अर्थः सहृदयाह्लादकारिस्वस्पन्दसुन्दरः। (ग) विशिष्टमेव साहित्यमभिप्रेतम्, इति चोक्तम्। अत्रैतद् बोध्यं यत् कुन्तकस्य विवक्षितार्थैकवाचकः वक्रताजनितविच्छित्तिप्रतिपादनसामर्थ्यवान् शब्दः, तथैव अर्थोऽपि स्पन्दसुन्दरः, अनयोः साहित्यं च अपूर्वा शोभाशालितां प्रति कापि मनोहारिण्यवस्थितिः। ग्रन्थेऽप्युक्तं यथा–

**वृत्त्यौचित्यमनोहारि रसानां परिपोषणम्।**
**स्पर्धया विद्यते यत्र यथास्वमुभयोरपि।।**
**सा काप्यवस्थितिस्तद्विदानन्दस्पन्दसुन्दरा।**
**पदादिवाक्यपरिस्पन्दसारः साहित्यमुच्यते।।**[१५]

**समसर्वगुणौ सन्तौ सदृशाविव सङ्गतौ।**
**परस्परस्य शोभायै शब्दार्थौ भवतो यथा।।**[१६]

**अपर्यालोचितेऽप्यर्थे बन्धसौन्दर्यसम्पदा।**
**गीतवद् हृदयाह्लादं तद्विदां विदधाति यत्।।**
**शरीरं जीवितेनेव स्फुरितेनेव जीवितम्।**
**विना निर्जीवितां येन वाक्यं याति विपश्चिताम्।।**[१७]

एतदेव सर्वं तावत् 'वक्रोक्ति'रिति, या प्रसिद्धप्रस्थानव्यतिरेकिणी विचित्रैवाभिधा, वैदग्ध्यभङ्गीभणितिस्वरूपा, अस्यैवालङ्कारता। अतएवोक्तम् यथा ग्रन्थे–''**शब्दार्थौ पृथगवस्थितौ केनापि व्यतिरिक्तेनालङ्करणेन योज्येते**'', किन्तु वक्रतावैचित्र्ययोगिताभिधानमेवानयोरलङ्कारः तस्यैव शोभाकारित्वात्। इति। इत्थमत्रानया रीत्या संक्षेपेणैव विचार्य कुन्तकाचार्यस्य वक्रोक्तिरत्र प्रस्तूयते, मन्ये सुधियामाह्लादो भविष्यति।

।। इति शम् ।।

## सन्दर्भाः


१. वक्रोक्तिजीवितम् ३।१८४

२. ध्वन्यालोकः २, उदा० श्लोक १८, वृत्तौ

३. काव्या० २।८५

४. काव्यालङ्कारः २।१४

५. ध्वन्या० ३।३६ कारिकायाः वृत्तौ)।

६. शृङ्गारप्रकाशः, पृ० ३७३

७. शृङ्गारप्रकाशः ६।१०७, पृ० ३७४

८. शृङ्गारप्रकाशः, पृ० ६२८

९. शृङ्गारप्रकाशः, पृ० ६२८

१०. वक्रोक्ति०

११. व०जी० १।३–५

१२. वक्रो० १।७

१३. वक्रो० १।६

१४. वक्रो० १।१०

१५. वक्रो०, अन्तरकारिका १।३५–३६

१६. तत्रैव १।१८

१७. तत्रैव १।३७–३९


□□

# आचार्यकुन्तकात् प्राक् वक्रोक्तिसिद्धान्तः

–रञ्जीता मौर्या

परमेष्ठिविरचितेषु भौतिकशरीरेषु यथा आत्मतत्त्वस्य प्राधान्यं भवति, आत्मानुप्राणितानि शरीराणि यथा स्वकीयं महत्त्वं वहन्ति तथैव काव्येऽपि आत्मभूततत्त्वस्यैव माहात्म्येन शब्दार्थशरीरस्य काव्यस्य सौन्दर्यमाकर्षणं च वरीवर्द्धते। आत्मतत्त्वस्याभावे काव्यत्वहानिर्जायते। अतः काव्यात्मभूत-तत्त्वस्यान्वेषणं कविभिराचार्यैः प्रारब्धं काव्यरचनाया आरम्भादेव। विविधैराचार्यैर्मतवैभिन्यमपि प्रकटितम्। केनापि रस एव काव्यस्यात्मा स्वीकृतः ध्वनिरित्यपरेण। काव्यशास्त्रस्य प्रतिष्ठापकेषु आद्याचार्यो भरतमुनिरासीत्, ये हि व्यवस्थितरीत्या काव्यस्य चर्चा विहिता। पश्चादस्य परवर्तिभिराचार्यैः काव्यतत्त्वं व्याख्याया काव्यशास्त्रीयसिद्धान्तानां निर्धारणं कृतम्। येनाचार्येण यस्मिन् तत्त्वे सौन्दर्योत्कर्षोऽनुभूतः तदेव तत्त्वं काव्यात्मभूतेन स्वीकृतम्। यतः नैकाः सम्प्रदायाः प्रतिष्ठिताः। येषु प्रमुखाः अधोलिखिताः षट् सम्प्रदायाः उल्लेखनीयाः–

रससम्प्रदायः, अलङ्कारसम्प्रदायः, ध्वनिसम्प्रदायः, रीतिसम्प्रदायः, वक्रोक्तिसम्प्रदायः, औचित्यसम्प्रदायश्चेति।

वक्रोक्तिसम्प्रदायस्य प्रवर्तकः आचार्यः कुन्तकोऽस्ति। तेन हि काव्यास्यात्मरूपेण प्रतिष्ठिता वक्रोक्तिः। आचार्यकुन्तकात् पूर्वमेव रीतिः ध्वनिःरसश्च काव्यात्मभावेन प्रतिष्ठिता आसन्। एभिस्तत्त्वैः सुपरिचित आसीत् आचार्यकुन्तकः। तेन हि सर्वथा नूतनमार्गस्य प्रवर्तनं विधाय त्रयाणामेव प्राक्तनसिद्धान्तानां समावेशं तस्मिन्नेव प्रस्थाने कृत्वा वक्रोक्तिरेव काव्यस्यात्मतत्त्वेन प्रतिष्ठिता। वक्रोक्तिरस्ति वक्रा उक्तिः। साधारणजनानां कथनोपकथनाद् व्यतिरिक्तमलौकिकचमत्कारि कथनं वक्रोक्तिरुच्यते। कदमिदं परिभाषयन् स वदति यत्–"**वक्रोक्तिरेव वैदग्ध्यभङ्गी भणितिः कथ्यते**" अतः वैदग्ध्यपूर्णा शैली वक्रोक्तिर्वर्णिता त, स्वीये काव्यलक्षणे अन्येभ्यः आचार्येभ्यः व्यक्तिरिक्तमेव लक्षणं प्रस्तुतं तेन–

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थिते काव्यं तद्विदाह्लादकारिणि।।**[१]

काव्यतत्त्वविदामाचार्याणां सहृदयजनानां वा परमाह्लादकारिवक्रकवेर्व्यापारविशिष्टरचनासु व्यवस्थितौ शब्दार्थौ एव काव्यमित्यभिधीयते। शरीरभूतयोः शब्दार्थयोः अधोलिखितं वैशिष्टद्वयं भवेत्–

(१) प्रसिद्धकथनव्यापारादव्यतिरिक्ता वक्रतानुप्राणिता भवेत् कवेरुक्तिः।

(२) अपि च सा उक्तिर्भवेत् सहृदयायहृदयाह्लादसमर्था।

अतः काव्ये वक्रोक्तेः स्थितिरपरिहार्या मन्यते आचार्यकुन्तकेन।

यद्यपि काव्यमार्गत्वेन वक्रोक्तेः प्राणानुदानस्य श्रेयः आचार्यकुन्तकस्यैव मन्यते तथापि वक्रोक्तेरूत्सः बीजरूपेण संस्कृतकाव्यशास्त्रे पूर्वत एव विद्यमान आसीत्। शनैः शनैः अस्यां विचारपरम्परायां क्रमिको विकासोऽभवत्। वक्रोक्तेः कल्पना अतीव प्राचीना वर्तते। अस्याः सर्वप्रथम उल्लेखः अथर्ववेदे प्राप्यते। तदनन्तरं च मेघदूते बाणभट्टस्य वा कृतिषु वक्रोक्तेः समुल्लेखः विद्यते। अथर्ववेदे कुटिल इत्यर्थे अभिधीयते शब्दोऽयम्। मेघदूते च–

**वक्रः पन्थाः यदपि भवतः प्रस्थितस्योत्तराशाम्।–मेघदूते पूर्वमेघे**

इति प्रच्छन्नभावेन समर्थयति असौ शब्दः। अन्येष्वपि लक्ष्यलक्षणग्रन्थेषु विविधाचार्यैः अस्य चर्चा प्रस्तुता। वासवदत्तायां काव्यशास्त्रविषयकंवचारं प्रकटयन् आचार्यसुबन्धुना वैदग्ध्यः शब्दः प्रयुक्तः। अमरुककविना वक्रोक्तेः प्रयोगः क्रीडालापः परिहासजल्पितेत्यर्थे कृतः–

**सा पत्युः प्रथमापराधसमये सख्योपदेशं विना।**
**न जानाति सविभ्रमाङ्गवसना वक्रोक्तिसंसूचनम्।।**[२]

भारतीयकाव्यशास्त्रे क्रमबद्धरूपेण व्यवस्थितविधिना च वक्रोक्तेर्विवेचनं सर्वप्रथमं भामहकाव्येषु दृश्यते अन्तर्भावः स्वीकृतः।

आचार्यः रुद्रटः शब्दालङ्कारान्तर्गतं परिगणयन् द्विधा विभजति वक्रोक्तिम्–श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति। काकुवक्रोक्तौ काक्वा अर्थात् उच्चारणस्य आरोहावरोहाभ्यामुक्तेः वक्रार्थोऽनुमीयते, श्लेषवक्रोक्तौ च श्लेषेण। रुद्रटस्य परवर्तिषु आचार्येषु तस्य प्रभावः स्पष्टेन परिलक्ष्यते।

ध्वनिसिद्धान्तस्य प्रतिष्ठापक आचार्यः आनन्दवर्द्धनः अलङ्कारविशिष्टेन स्थापयति वक्रोक्तिम्। तेन वक्रतायै अतिशयतायाश्चप्रयोगो विषयानुरोधेन स्वीक्रियते, ध्वनेश्चानुशासने एव वक्रोक्तिर्गृह्यते। अतिशयोक्तेर्वक्रोक्तेश्च पर्यायत्वं स्वीकुर्वन् स वदति यत् प्रथमं तु सर्वे एव अलङ्काराः अतिशयोक्तिगर्भाः सन्ति ये हि कवीनां काव्येषु अनिर्वचनीयां शोभां जनयन्ति।

एवं हि उपर्युक्तविवेचनेन प्रतिभाति यत् अतिशयोक्तिर्वक्रोक्तिश्च पर्यायाभिधायिन्यौ सर्वालङ्काररूपण्यिौ स्तः। वक्रोक्तेश्चमत्कारः प्रतिभाजन्यो भवति, विषयस्य औचित्यं च तन्नियामकम्।

आनन्दवर्धनस्य परवर्त्याचार्यकुन्तकोऽभूत् यो हि स्वस्य मौलिकप्रतिभा प्रखरमेधया च काव्यस्य मूलसिद्धान्तेभ्यो नवीनता प्राददात्। वक्रोक्तिर्नाम विचित्रा अभिधा इति वदति कुन्तकः। यदि अभिधा प्रसिद्धाभिधानं चेत् वक्रोक्तिप्रसिद्धाभिधानव्यतिरेकिणी भवति। पृथगलङ्काररूपेणा-स्वीकुर्वता कुन्तकेन अतीव सारल्येन सुस्पष्टभावेन च वक्रोक्तिर्नाम काव्यजीवितं (काव्यात्मा) भणितम्। तन्मतानुसारं हि आह्लादकारिसालङ्कारशब्दार्थसाहित्यमेव काव्यमुच्यते। कुन्तकस्य

वक्रोक्तिर्वैदग्ध्यभङ्गीभणितिरस्ति। सा कथनस्य कौशलयुक्तविचित्रता कविप्रतिभाश्रिता भवति परिभाषायामस्यां कुन्तकेन शब्दालङ्कारार्थालङ्कारप्रबन्धकौशलादीनां काव्यतत्त्वानां समावेशः कृतः। काव्यं हि मूलतः तस्य वक्रोक्तिविषयकपरिकल्पनैव वक्रोक्तेर्व्यापकार्थस्य आधारशिला अस्ति। अलङ्कारकाव्यसर्वस्वं प्रतिपादयता तेन वक्रोक्तिः अलङ्कारस्य प्राणभूता निगदिता सकलालङ्काराणां प्रपञ्चभूता वक्रोक्तिः स्वीकृता भामहेन, यतः का अर्थरमणीयता वर्द्धते। वक्रोक्तौ शब्दस्य अर्थस्य च द्वयोरेव वक्रता वर्णिता अनेन–

वक्रताभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः।[३]

यत्र वक्रोक्तेरभावो विद्यते सा रचना केवलं वार्ता एव। वक्रोक्तियोगं बिना तु अर्थविभाजनमपि न सम्भवति। वक्रोक्तेः मर्यादां निर्धारयन् आचार्यो भामहः तस्या उपादेयताविषये निगदितं यत्–

'वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते। '

अर्थात् वक्रार्थे शब्दानामुक्तिरलङ्कार उच्यते।

आचार्यदण्डिना सम्पूर्णमेव वाङ्मयं द्विधा विभज्यते स्वभावोक्तिः वक्रोक्तिश्च। तन्मतानुसारं यत्र पदार्थानां साक्षात् वर्णनं भवति तत्र आद्यालङ्कारः (स्वभावोक्तिः) भवति। वक्रोक्तिर्नाम तद्भिन्नैव स्थितिः। वक्रोक्तौ वस्तूनां साक्षात् सहजं वा वर्णनं न अपितु चमत्कारपूर्णं वर्णनं प्रतिपाद्यते। वक्रोक्तिः अतिशयोक्तिश्च परस्परं पयार्याभिधायिनौ स्वीकृता तेनोक्तं यत् श्लेषविधानेन वक्रोक्तिः समधिकमेव चमत्कारं जनयति। एवं ज्ञायते यत् भामहस्य वक्रोक्तिकल्पना दण्डिना अपि स्वीकृता। अन्तरं केवलमिदं यत् भामहः स्वभावोक्तिं वक्रोक्तिपरिधावेव गणयति दण्डी च स्वभावोक्तिं सर्वथा पृथग्गणयति।

आचार्यवामनः वक्रोक्तिं लक्षणायाः पर्यायं मत्वा शब्दालङ्कारान्निःसृत्य ताम् अर्थालङ्कारे प्रस्थापयत्। रीतिर्नाम काव्यस्यात्मा इति पोषयता तेन विशिष्टपदरचना रीतिरिति लक्षणे या विशिष्टता वर्णिता सैव वक्रोक्तिः। तेन ओजः श्लेषोदारताकान्तिप्रभृतिषु गुणेषु कुन्तकस्य वर्णविन्यासवक्रता कविव्यापारो निगद्यते। कवेः संस्कारस्वभावसुकुमारतैव काव्ये रमणीयचमत्कारमुत्पादयति। इत्थमनुमीयते यत् संस्कृतकाव्यशास्त्रे कदाचित्पूर्वमेधे सुव्यवस्थितवैज्ञानिकरीत्या कलानुप्राणितमूल्यानां स्थापना अभूत्।[४] वक्रोक्ति सिद्धान्तश्च अतीव सूक्ष्मो व्यापकः परिनिष्ठितो वा काव्यसिद्धान्तोऽस्ति[५] वक्रतानाम काव्यगतोक्तेरभिव्यक्तेर्वा तादृशी विचित्राऽस्ति या हि सामान्यलोकव्यवहारगतभाषायाः शास्त्राणां वा तथ्यकथनात् पृथक्करोति ताम्। सैव वक्रता काव्ये लोकोत्तरं चमत्कारं जनयति यतःसहृदयानां हृदयाह्लादो जायते।

संक्षेपेण वक्तुं शक्यते यत् वक्रोक्तिसिद्धान्तस्य उत्सः भामहस्य वक्रोक्तिविषयको व्यापकः सिद्धान्त एवास्ति। किन्तु भामहेन वक्रोक्तेः व्यापकता अलङ्काराणामेव परिधौ मर्यादिता या

सामर्थ्यानुकूला आसीत् किन्तु कुन्तकेन वक्रोक्तिं काव्यस्य एकमात्रजीवितं (प्राणभूतं) इति प्रतिष्ठापयितुं चेष्टितम्। भामहेन वक्रोक्तिः अलङ्काराणां मूलस्थानीया वर्णिता, वामनेन सादृश्यमूललक्षणात्वेन-स्वीकृता, रुद्रटेन च शब्दालङ्कारविशिष्टा अधिगृहीता वक्रोक्तिः। किन्तु आचार्यकुन्तकः वक्रोक्तिं काव्यस्य मूलतत्त्वं विदधाति अपि च तस्याः पृथग्वैशिष्ट्यं वर्णयन् प्रस्थानेऽत्र अलङ्काररीतिरस-ध्वन्यादीनां एकाङ्गिकतामपहाय सार्वभौमरूपेण काव्यस्वरूपं प्रस्तौति। आचार्य कुन्तकेन वक्रोक्तिजीविते वक्रोक्तितत्त्वस्य प्रतिपादनं वस्तुतः महनीयं स्तुत्यं चास्ति।

## सन्दर्भाः

१. वक्रोक्तिजीवितम् १।६
२. अमरूकशतकम् २३१।
३. काव्यालङ्कारः १।३६
४. भारतीयकाव्यशास्त्र, संस्कृतकाव्यशास्त्र—डॉ० कृष्णबल
५. पश्चात् काव्यशास्त्र, पृ० १७९—देवेन्द्रनाथ शर्मा

❑❑

# आचार्यकुन्तकः वक्रोक्तिसिद्धान्तश्च

–श्यामसुन्दर साधुखाँ

सर्वे विद्वांसः जानन्त्येव यत् अलङ्कारशास्त्रस्य इतिहासे 'कुन्तकः' वक्रोक्तिजीवितकारः इति संज्ञा अभिधीयते। अस्य विशिष्टः सिद्धान्तः अयमेवास्ति यत् 'वक्रोक्तिरेवकाव्यस्यप्राणतत्वमस्ति'। ग्रन्थेऽस्मिन् चत्वारोन्मेषाः सन्ति। ग्रन्थेऽस्मिन् त्रयोभागाः सन्ति, तद्यथा कारिका, वृत्तिः उदाहरणञ्च। तत्र कारिका वृत्तिश्चेति कुन्तकस्य स्वीया रचना अस्ति। उदाहरणानि संस्कृतसाहित्यस्य प्रसिद्धग्रन्थेभ्यः गृहीतानि सन्ति। तद् विधाय वक्रोक्तेः आभ्यन्तरे एवं समस्तानां साहित्यिकतत्त्वानाम् अन्तर्विधानं कृत्वा श्रीमद्राजानाककुन्तकेन महत्या विदग्धतया परिचयः प्रदत्तः। तेषामुपरि साहित्यिका सदा आकृष्टाः स्थास्यन्ति।

**परिचयः**–आचार्यवरस्य कुन्तकस्य कार्यकालनिरूपणं तु वक्रोक्तिजीविताख्ये ग्रन्थे चर्चितं च सम्यक्तया सुपरिचितः आसीत्। राजशेखरस्य ग्रन्थानाम् उद्धरणं वक्रोक्तिजीविते अनेकधा प्रयुक्तत्वात् सिद्ध्यति यत् कुन्तकाचार्यः सुनिश्चितरूपेण राजशेखरात् पश्चादवर्ती भवितुमर्हति। आचार्येण महिमभट्टेन अपि स्वीकीये ग्रन्थे कुन्तकस्य पर्याप्तं खण्डनं कृतमस्ति। महिमभट्टस्य कालः एकादशशतख्रीष्टाब्दस्य अन्तिमोभागः अस्ति। अपरेषां मते कुन्तकस्य कालः ख्रीष्टाब्दस्य दशमशतकस्य अन्ते एकादशशतकस्य प्रारम्भे वा स्वीकरणीयम् समुचितं प्रतिभाति। कुन्तकेन अभिनवगुप्तस्य निर्देशः क्वापि न कृतः न च अभिनवगुप्तेन कुन्तकस्य च। परञ्च लोचनेन अभिनवभारत्याश्च प्रतीयते यत् 'अभिनवगुप्तः' कुन्तकस्य वक्रोक्तेः विविधायामैः सुपरिचितः आसीत्। अतः अनुमीयते यत् 'कुन्तकाचार्यः' अभिनवगुप्तस्य समसामयिकोपवस्थायां तस्माद्श्रेष्ठ एव प्रतीयते।

**वक्रोक्तिसिद्धान्तः**–सर्वे जानन्त्येव यत् कुन्तकाचार्यास्य मते 'वक्रोक्तिः काव्यजीवितम्' इत्येतस्य तात्पर्यमस्ति किमस्य पूर्ववैलक्षण्ययुक्तं लोकत्तरचमत्कारजनकं कथनम् इति। कारणं चात्र सुस्पष्टमस्ति यत नानाविधाः उक्तयस्तु सामान्यव्यवहारेऽपि प्रयुज्यते, परञ्च तत्र रसचर्वणया उन्मीलिनम् न दृश्यते। इदन्तु कवेः काव्यस्य वा लोकोत्तरं वर्णनमस्ति यत् सामाजिकेषु रसचर्वणायाः उन्मेषं करोति।

अतः 'वक्रोक्तिः' शब्दे पदद्वयम् वर्तते वक्रा–उक्तिश्च च वक्रस्य शाब्दिकः अर्थः कुटिलः वक्रभावापन्नः विलक्षणोऽस्ति। उक्तिस्तु कविकथनपर्यायः। इत्थं वक्रोक्तेः सामान्योऽर्थः वक्रभावेन सुशोभितोऽर्थभावापन्नकथनप्रकारः। अत एव ग्रन्थकारेण कुन्तकेन एतस्य व्याख्यायां "वैदग्ध्यभङ्गीभणिति' इति पदस्य प्रयोगः कृतः।

वक्रतायाः स्वरूपव्यहारप्रसङ्गे आचार्येण कुन्तकेनात्र विविधायामैः लाक्षणिकप्रसङ्गैः निरूपितम्।

तद्व्याख्यानञ्च मुखत्वेन यथा–शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्धव्यतिरेकि, प्रसिद्धप्रस्थानव्यतिरेकि अतिक्रान्तव्यवहारसारणीश्चेति। अत्र एषां अयमाश्रयः यतः शास्त्रप्रतिपादितानां व्यवहारे प्रयुक्तानाञ्च भावनाम् अतिव्यक्तिरूपाय मनुष्यः यस्य कस्यापि सुगमस्य मार्गस्य आश्रयणं करोति, तमतीक्रम्य प्रतिभा–प्रभा मण्डितोऽयं कविः पद–पदार्थयोः दिग्दर्शने वैलक्षण्यम् उत्पादयति।

प्रस्तुतेऽत्र विषये आचार्येण कुन्तकेन महाकवेः कालिदासस्य मेघदूतस्य एकम् उत्कृष्टम् उदाहरणं व्यवहारिकपक्षोपस्थापनाय स्थापितम् तद्यथा–

भर्तुमित्रं प्रियमविधवे विद्धि मामम्बुवाहं,
तत्संदेशैर्हृदयनिहितैरागतं त्वत्समीपम्।
यो वृन्दानि विरमयति पथि श्राम्यतां प्रोषितानां,
मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि ।।[१]

अत्र 'अविधवे' इत्यादि प्रतिपदं पदपदार्थानां उद्बोधकं सहृदयानाञ्चेति। इत्थं समासेन वक्रोक्ति प्राणभूता समीक्षा साहित्यसाररसिकानां पुरतः विलसति।

धर्मादिसाधनोपायः सुकुमारक्रमोदितः।
काव्यवन्धोऽभिजातानां हृदयाह्लादकारकः।।[२]

हृदयाह्लादकारकश्चित्तानन्दजनकः काव्यबन्धः सर्गबन्धादिर्भवति सम्बन्धः। तत्र अभिजाता खलु राजपुत्रादयो धर्माद्युपेयार्थिनी विजिगीषः क्लेशभीरवश्च, सुकुमाराशयत्वात् तेषाम् तथा सत्यपि तदाह्लादकत्वे काव्यबन्धस्य क्रीडनकादि प्रख्याता प्राप्नोति इत्याह–धर्मादिसाधनोपायः। धर्मदेः उपेयभूतस्य चतुर्वर्गस्य साधने सम्पादने तदुपदेशरूपत्वाद् उपायस्ततप्राप्तिनिमित्तम्। तथापि तथाविधपुरुषार्थः उपदेशपरैरपरैरपि शास्त्रैः किमपराद्धम् इत्थमभिधीयते–सुकुमारक्रमोदितः। सुकुमारः सुन्दरः सहृदयहृदयग्राही क्रमः परिपाटीविन्यासः तथोदितः कथितः सन्। अभिजातानाम् आह्लादकत्वे सति प्रवर्तकात् काव्यबन्धो धर्मादिप्राप्त्युपायानाम् प्रतिपद्यते। शास्त्रेषु पुनः कठोरक्रमाभिहितत्वात् धर्माद्युपदेशो दुरवगाहः। तथाविधे विषये विद्यमानेऽप्यकिञ्चित्कर एव।

राजपुत्राः खलु समासादितविभवाः समस्तजगतीव्यवस्थाकारितां प्रतिपद्यमानाः श्लाघ्योपायोपदेशशून्यतया स्वतन्त्राः सन्ति समुचितसकलव्यवहारोच्छेदं प्रवर्तयितुं प्रभवन्ति।

अन्यदपि लोकयात्राप्रवृत्तिनिमित्तं भृत्य–सुहृदय–साम्यादि–समावर्जनमनेन विना सम्यक् न सम्भवति इत्याह–

व्यवहारपरिस्पन्दसौन्दर्यं व्यवहारिभिः।
सत्काव्याधिगमादेव नूतनौचित्यमाप्यते।।[३]

चतुवर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते।।[४]

अर्थात् लोकव्यवहारे प्रवृत्ताः जनाः नूतनौचित्ययुक्तस्य लोकाचारव्यापरस्य सौन्दर्यम् उक्तमहाकाव्यपरिज्ञानेन प्राप्नुवन्ति। योऽसौ चतुर्वर्गफलास्वादः प्रकृष्टपुरुषार्थतया सर्वशास्त्रप्रयोजनत्वेन प्रसिद्धः योऽप्यस्य काव्यामृतचर्वणचमत्कारकलामात्रस्य न कामपि साम्यतां कर्तुमर्हतीति।

अपि च काव्यप्रयोजनस्य फलश्रुतिर्यथा–

कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम्।
आह्लाद्यमृतवत्काव्यमविवेकगदापहाम्।।

## सन्दर्भाः

१. कालिदासस्य 'मेघदूतम्' गीतिकाव्ये उत्तरमेघे २।३८
२. आचार्यकुन्तकस्य 'वक्रोक्तिजीवितम्' ग्रन्थे १।३
३. आचार्यकुन्तकस्य 'वक्रोक्तिजीवितम्' ग्रन्थे १।४
४. आचार्यकुन्तकस्य 'वक्रोक्तिजीवितम्' ग्रन्थे १।५

□□

# वक्रोक्तिजीविते कारक-संख्या-पुरुषवक्रता च

–वि० लक्ष्मी कीर्तिसुधा

साहित्यशास्त्रे षट् मुख्यसम्प्रदायेषु एकः वर्तते वक्रोक्तिः। वक्रोक्तिर्नाम–

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।[१]इति।।**

अर्थात् अलङ्करणयोग्य-शब्दार्थालङ्कारसहित-चातुर्य-पूर्णभङ्गी-उक्तिरेव वक्रोक्तिः। सम्प्रदायस्यास्य प्रवक्ता श्रीमद्राजानककुन्तकः। तेन अत्यन्तसरलयुक्तं, साहित्यलोकप्रसिद्धं 'वक्रोक्तिजीवितम्' इत्याख्यं ग्रन्थं अविरच्यत। उन्मेषत्रये वक्रोक्तिजीविते मुख्यतया वक्रोक्तिः षड्विधा विभक्ता।

**कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षट्।**
**प्रत्येकं बहवो भेदाः तेषां विच्छित्तिशोभिनः।।[२]इति।।**

किन्तु एते वक्रताप्रकाराः कतिचिन्निदर्शनार्थं प्रदर्शिताः। लोके बहवो पण्डिताः विराजन्ते इति, तेषां प्रयोगे स्वयमन्वेषणीयमिति कथयन्ति कवयः।

षड्विधमुख्यवक्रताभेदेषु एकः वर्तते–प्रत्ययाश्रितवक्रता इति। प्रत्ययाश्रितवक्रतायां पुनः षड्भेदाः सन्ति, तानि–कालवैचित्र्यवक्रता, कारकवैचित्र्यवक्रता, संख्यावैचित्र्यवक्रता, पुरुषवक्रता, उपग्रहवक्रता, प्रत्ययविहितप्रत्ययवक्रता चेति। सामान्यतया एवं वक्तुं शक्यते–प्रथमोन्मेषे वर्णितानां वक्रतानां लक्षणानि, उदाहरणानि च द्वितीयोन्मेषे स्पष्टमकारीति।

काव्यबन्धशोभायै यत्र वचनवैचित्र्यं निबध्यते सा प्रत्ययाश्रितवक्रता। प्रत्ययः द्विधा वर्तते–सुबन्तप्रत्ययाः, तिङन्तप्रत्ययाश्चेति। अत्र तु प्रत्ययाश्रितवक्रतायाः बहवः प्रकाराः दृश्यन्ते–तेषु मुख्यतमे वर्तेते संख्यावैचित्र्यविहितवक्रता, कारकवैचित्र्यविहितवक्रता च।

**संख्यावैचित्र्यविहितवक्रता**–संख्या अर्थात् वचनम् इत्युक्ते एकवचन-द्विवचन-बहुवचनानि। तेषां विचित्रता कारणेन काव्यस्य शोभा वर्धते, यथा–मैथिली तस्य दाराः।[३]

(दारा शब्दः नित्यबहुवचनान्तः) मैथिली सीतादेवी तस्य रामस्य दाराः पत्नी इत्यर्थे आयाति किन्तु मैथिली इति एकवचनान्तशब्दः, दाराः इति बहुवचनान्तशब्दः कथं वाक्यं सम्भवति? इति प्रश्ने सति दाराशब्दः नित्यबहुवचनान्तः।

एवमेव द्विवचनस्थाने बहुवचनप्रयोगः अपि दृश्यते। यथा–फुल्लेन्दीवरकाननानि नयने पाणी सरोजाकरः[४]। अर्थात् तस्याः नेत्रे विकसितनीलकमलानां वनानीति हस्तौ कमलानां सागराश्चेति

वर्णितम्। अत्र द्विवचनबहुवचनानां सामानाधिकरण्यमत्यन्तं चमत्कारोत्पादकम्। एवं संख्यायाः विशिष्टकारणात् काव्ये चमत्कारः आयाति।

**कारकवैचित्र्यवक्रोक्तिः**—यः क्रियया अन्वेति सम्बन्धं प्राप्नोति सः कारकमित्यर्थः। तच्च कारकं षड्विधम्—

**कर्ता कर्म च करणं सम्प्रदानं तथैव च।**
**अपादानाधिकरणमित्याहुः कारकाणि षट्।।**

तेषां कारकाणां विचित्रतया उत्पन्नः भेद एव कारकवैचित्र्यवक्रोक्तिः। अचतेनस्यापि पदार्थस्य चेतनत्वारोपेण तस्मिन् कर्तृत्वादिकारकाणामभिनिवेशः भवति। यथा—

**स्तनद्वन्दं मन्दं स्नपयति बलाद्वाष्पनिवहो**
**हठादन्तः कण्ठं लुठति सरसः पञ्चमरवः।**
**शरज्जोत्स्नापाण्डुः पतति च कपोलः करतले**
**न जानीमस्तस्याः क इव हि विकारव्यतिकरः।।**[५]

अर्थात् एका स्त्री विरहवेदनया पीडामनुभवति। तदानीं अश्रवः तस्याः पयोधरयुगस्य मन्दं मन्दं स्नानं कारयन्ति। शरच्चन्द्रिकासदृशपाण्डुवर्णयुक्तः तस्याः कपोलः हस्ते स्खलति। एतादृश्याः नायिकायाः विरहावस्थां वयं ज्ञातुमशक्ताः इति।

अस्मिन् श्लोके अश्रुसमूहादयः अचेतनाश्चेदपि कविः तेषु चेतनामध्यारोप्य कर्तृतामापादयत्। यतो हि तस्याः रमण्याः पराधीनतां दर्शयितुम्। सा नायिका आत्मना किमपि व्यवहर्तुं न शक्नोतीति आशयः। एवमेव गण्डस्थलादीनाम् अवयवानामवस्था अस्माकं दृष्टिपथमेव, किन्तु तस्याः आन्तरङ्गिकस्थितिः अस्माभिः ज्ञातुं न शक्यते। एवं अचेतनादिषु चेतनत्वारोपेणापि काव्ये चमत्कारः उद्भवति।

**पुरुषवैचित्र्यवक्रोक्तिः**—प्रथ-मध्यम-उत्तमपुरुषभेदेन पुरुषत्रयं विराजन्ते शास्त्रे। कविभिः अपरभावस्य विपर्यासः परित्यक्त्वा कारकवैचित्र्यवक्रतार्थं युष्मदस्मदि प्रयोक्तव्ये स्थले प्रातिपदिकमात्रस्य प्रयोगः क्रियन्ते। यथा—

**अस्मद्भाग्यविपर्ययात् यदि परं देवो न जानाति तम्।**[६]

अर्थात् अस्माकं दौर्भाग्यवशात् देवः भवान् महिमामयं रामं न जानातीति। इदं वचनम् रामायणे विभीषणः रावणं प्रत्यकथयत्। अत्र त्वं न जानासि इति वक्तव्ये काव्यशोभार्थं वैचित्र्यार्थञ्च देवो न जानातीत्युक्तम्। एवमेव युष्मदस्मद्विपर्यासः क्रियापदं विना केवलप्रातिपदिकमात्रेऽपि उपयुज्यन्ते। कालिदासेन विरचिते कुमारसम्भवमहाकाव्ये पञ्चमसर्गे वटुवेषधारी परमशिवः तपस्विनीं पार्वतीं

पृच्छति इत्थम्–

अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि।[७]

अयि तपस्विनि ! अयं पुरुषः प्रष्टुकामोऽस्ति, यदि गोपनीयः विषयः नास्ति तर्हि निःसङ्कोचेन कथयितुमर्हसि इत्यर्थः। अत्र अहं प्रष्टुकामोऽस्मीति वक्तव्ये ताटस्थ्यप्रतीत्यर्थं अयं जनः इति उक्तवान्। एवमेव भासस्य स्वप्नवासदत्तायाम् अग्नौ भस्मीभूतां वासवदत्तां प्रति उदयनः एवमगदीत्–

सोऽयं दम्भधृतव्रत इति[८]।

सः असौ अयं एष एकपत्नीत्वदम्भव्रतधारीत्यर्थः। अत्रापि सोऽहमिति वा एषोऽहमिति वा वक्तव्ये पूर्ववत् अयमिति कथितं वैचित्र्यताप्रतीत्यर्थम्।

एवं निदर्शनार्थं कतिचन मुख्यवक्रताभेदाः प्रदर्शिताः। सभ्याश्च नैकाः संभावयन्ति महाकवीनां प्रयोगप्रवाहे। ताः सर्वाः वक्रताः स्वयमवलोकनीयाः इति शम्।

यदत्र सौष्ठवं किञ्चित् तद्गुरोरेव मे न हि।
यदत्रासौष्ठवं किञ्चित् तन्ममैव गुरोर्न हि।।

## सन्दर्भाः


१. वक्रोक्तिजीविते प्रथमोन्मेषे, श्लोकः १०
२. वक्रोक्तिजीविते प्रथमोन्मेषे, श्लोकः १८
३. वक्रोक्तिजीविते प्रथमोन्मेषे, श्लोकः ६३
४. वक्रोक्तिजीविते प्रथमोन्मेषे, श्लोकः ६४
५. वक्रोक्तिजीविते प्रथमोन्मेषे, श्लोकः ६५
६. वक्रोक्तिजीविते प्रथमोन्मेषे, श्लोकः ६७
७. वक्रोक्तिजीविते प्रथमोन्मेषे, श्लोकः ६८
८. वक्रोक्तिजीविते प्रथमोन्मेषे, श्लोकः ६९


□□

# वक्रोक्तिसिद्धान्तस्य प्रतिष्ठापकः आचार्यः कुन्तकः

–डॉ० रीता सिंह

ध्वनिः वक्रोक्तिश्च संस्कृतकाव्यशास्त्रस्य अत्यन्तमहत्त्वपूर्णौ प्रस्थानौ स्तः। ध्वनेः सिद्धान्तरूपे प्रतिष्ठा नवमशताब्द्याः आचार्यस्य आनन्दवर्धनस्य मौलिकं चिन्तनम्। स व्यङ्ग्यहीनं काव्यं काव्यस्य चित्रमात्रं मत्वा तं काव्यश्रेण्यां न व्यवसितम्। तेन सहृदयश्लाघ्यः व्यङ्ग्यार्थः (ध्वनिः) काव्यात्मा-विनिश्चयन् काव्यसौन्दर्यस्य आत्मपरका भावपक्षीया च व्याख्या प्रस्तुता। वस्तुतः काव्यस्य सम्बन्धः कविना, सहृदयेन च उभाभ्यां भवति। कविः काव्यस्य प्रणयनं करोति, सहृदयः चेतसः मूल्याङ्कनं करोति। यद्यपि सहृदयश्लाघ्य-व्यङ्ग्यार्थोऽपि लोकोत्तर-कविकर्म-कौशलनिहितो भवति, तथापि आनन्दवर्धनः सहृदयपक्षं एवं प्रामुख्येन प्रतिष्ठापितम्। अनेन प्रकारेण सः कविना सह न्यायः न कृतवान्। इदम् तस्य सिद्धान्तस्य दुर्बलपक्षम्।

इदम् पक्षम् अवधार्य यदा वयम् दशम्याः शताब्द्याः आचार्यस्य कुन्तकस्य वक्रोक्तिजीवितस्य अनुशीलनं कुर्मः तदा प्रतीयते यत् आनन्दवर्धनाचार्यस्य दुर्बलपक्षं निरवकाशं कर्त्तुं कुन्तकः तस्य ध्वनिसिद्धान्तस्य प्रत्युत्तरे विकल्परूपे वा काव्यशास्त्रे वक्रोक्तिसिद्धान्तस्य प्रतिष्ठां कृतवान्। आचार्यःकुन्तकः स्वसिद्धान्ते काव्य-सौन्दर्यस्य वस्तुपरकां कलापक्षीयां च व्याख्यां कृत्वा कविकर्मकौशलप्राधान्येन सह सहृदयाह्लादरूपं भावपक्षीयचमत्काराय अपि महत्त्वं प्रदत्तवान्। तस्य सिद्धान्ते कविपक्षस्य प्रधानता भवनपि सहृदयेभ्यः समुचितं समादरो दृग्गतोऽस्ति। आनन्दवर्धनस्य व्यङ्ग्यहीनं काव्यमपि कुन्तकदृष्ट्या कवेर्वचनभङ्गिमया सहृदयाह्लादकतया च सम्पृक्ते सति अकाव्यस्य प्रयोजकः न भवन्ति। आनन्दवधर्नाचार्यस्य विचारः सैद्धान्तिकरूपेण तु उत्कृष्टः मन्यन्ते बुधाः परञ्च व्यावहारिकपक्षे तु समीचीनं नैव संघटते। अपरतः कुन्तकस्य सिद्धान्तः व्यवहारक्षेत्रेऽपि सर्वथा वरणीयः। तस्यवक्रताध्वनिना व्यापकत्वं लभते। ध्वनिस्तु वक्रतायाः अङ्गमात्रं भूत्वा तस्यामन्तर्भूता इव प्रतिभाति। समासतः अहं कथयितुं शक्ये यत् ध्वनेः वक्रोक्तेः च सिद्धान्ते एकतः व्यङ्ग्ज्यार्थः काव्य-सौन्दर्य-निकषः, अपरतः कवि-कथनशैली महीयते। एकतः भावपक्षप्राधान्यम् वर्तते तु अपरतः कलापक्षः अपि जागृतः। एकतः कविगतप्रतिभारूपं सहजं कौशलं प्रधानमस्ति तर्हि अपरतः प्रतिभया सहैव व्युत्पत्तेः अभ्यासरुपे च आहार्यं कौशलमपि प्रधानतया विद्यते। एकतः सहृदयचिन्तकस्य पक्षः अपरतः कवेःपक्षः, एकतः आदर्शवादः अपरतः यथार्थवादः दृश्यते।

आचार्यः कुन्तकः काव्यस्य महच्चमत्कारे, प्रकारेण, प्रबन्ध वक्रतायाम् पृथक-पृथक रूपेण सुविस्तृतं विचारितवान्। सः पूर्ववर्त्तिनाम् आचार्याणाम् (आनन्दवर्धनेन सहितम्) रसवत् अलङ्कार विषयिणी मान्यतायाः सबलैः तर्कैः खण्डनम् कृत्वा अस्मिन् क्षेत्रे सर्वथा नवीनं चिन्तनं मण्डितवान्। ते तु रसं अलङ्कार्यं स्वीचक्रुः। सरसता सम्पादकत्वेन सहृदयालाह्लादकत्वेन च भूते सति रसस्य इव

अलङ्कारं रसवत् इति कथ्यते। कुन्तकस्तु नैव ध्वनिविरोधी, नैव अभिधावादी न च लक्षणवादी अस्ति। "विचित्रैवाभिधा वक्रोक्तिः" इत्यस्मिन् अभिधया तात्पर्यम् अभिधानस्य कथनस्य वा प्रकारेणास्ति न तु अभिधाशक्त्या।

वक्रोक्तिसिद्धान्तस्य प्रवर्तकः आचार्यभामहः इति कथयितुं शक्यते, परञ्च तेन वक्रोक्ति-सिद्धान्तोपरि विस्तृतरूपेण नैव सुविचारितम् अतएव वक्रोक्तिसिद्धान्तस्य प्रतिष्ठापकः आचार्यः कुन्तक एव सर्वमान्यः वर्तते। कुन्तकः वक्रोक्तिं काव्यजीवितं स्वीचकार। स तु वक्रतां सहृदयह्लादकारकं कथयित्वा तस्यां भावपक्षस्य चमत्कारं गृहीतवान्।

**तद्विदाह्लादकारित्वमेव वक्रत्वम्।**[१]

आचार्यकुन्तकः प्रथितकथनप्रकारान्तरेणभिन्नां विचित्राभिधां वक्रोक्तिः इति भणितवान्। "प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा वक्रोक्तिः।"[२]

वक्रोक्त्यां लोकव्यवहारे प्रसिद्धमसाधारणं कथनं न गृह्यते अपितु अस्मिन् कविकर्म कौशलजन्यचमत्कारपूर्णकथनम् समायाति। कुन्तकः वक्रोक्तिम् काव्यस्यापूर्वं अलङ्कारं स्वीकृतवान्। ते शब्दं अर्थञ्च अलङ्कार्यं वक्रोक्तिं च अलङ्कारः कथयन्ति।

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।**[३]

वक्रस्य तात्पर्यं शास्त्रादौ प्रसिद्धयोः शब्दार्थयोः सामान्यप्रयोगेण भिन्ना षट्विधया वक्रतया अस्ति।

**"वक्रोऽसौ शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्धव्यतिरेकी षट्प्रकारवक्रताविशिष्टः कवि व्यापारः।"**[४]

कुन्तकः शब्दार्थयोः वक्रोक्तिरुपमलङ्कारं वक्रतावैचित्र्यसम्पन्नमभिधानं कथनप्रकारं वा मनुते। **"वक्रतावैचित्र्ययोगिनयाभिधानममेवानयोरलङ्कारः"**[५] आचार्यकुन्तकः वक्रोक्तिं अलङ्कारसामान्यं भणति—"वक्रोक्तिः सकलालङ्कारसामान्यम्।"[६]

कुन्तकेन प्रतिपादितस्य सिद्धान्तस्य महत्त्वपूर्णः पक्षोऽयम् यत् सः वक्रोक्तिं काव्यस्य आत्मा जीवनं वा मनुते। तेन स्व ग्रन्थस्य नाम "वक्रोक्तिजीवितम्" सुप्रतिष्ठितम्। कुन्तकः "सालङ्कारस्य काव्यता"[७] कथयित्वा अलङ्कारं काव्यप्राणं स्वीकरोति। सैवालङ्कारः वक्रोक्तिः। वक्रोक्तिमाध्यमेन कुन्तकः काव्ये मुख्यरूपेण कलापक्षीयं चमत्कृतिं समीक्ष्य सहैव भावपक्षमपि प्रभूतं समीहते। स तु काव्यं वक्रोक्तिञ्च उभौ अनिवार्यरूपेण सहृदयाह्लादकौ स्वीकरोति।"

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।**[८]

आचार्यः कुन्तको वक्रोक्तिं षोढा विभजति। तेषां षट्प्रमुखान् भेदानपि बहवः भेद-प्रभेदाः कृतवन्तः–

कविव्यापारवक्रत्वं प्रकाराः सम्भवन्ति षट्।
प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशोभिनः।।[९]

वक्रोक्तेः षट् भेदाः इत्थं रूपेण प्रदर्शनीयाः–

वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता।
वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः।।
वाक्यस्य वक्रभावोयो भिद्यते यः सहस्त्रधा।
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।।
बहुभावः प्रकरेण प्रबन्धेवास्ति यादृशः।
उच्यते सहजाहार्य-सौकुमार्य-मनोहरः।।[१०]

अर्थात् वर्णविन्यासवक्रता, पदपूर्वार्धवक्रता, पदपरार्धवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रबन्धवक्रता चेति।

उक्त विभाजनेन ज्ञायते यद् वक्रोक्तेःविस्तारो वर्णादारभ्य प्रबन्धं यावद् वर्तते। एतदन्तर्गतमेव भाषा, प्रकृति वर्णनम्, चरित्रचित्रणम्, कथासंयोजनम्, ऐतिहासिक-तथ्य-सङ्कलनम्, वस्तुवर्णनम् अलङ्कारविधानम्, रसप्रयोगः, काव्यसन्देशादिकं च तथा सूत्ररूपेणोपलभ्यते येन परवर्तिन्याः साहित्यिकसमीक्षामयाः सरण्यः प्रशस्ता भवन्ति। यथा–

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि।।[११]

(१) वर्णविन्यासवक्रता तु व्यञ्जनवर्णानाम् विशिष्टक्रमे विन्यासस्य चमत्कारोऽस्ति।

वर्णशब्दोऽत्र व्यञ्जनपर्यायः तथा प्रसिद्धत्वात्।
तेन सा वर्णविन्यास वक्रताव्यञ्जनविन्यासविच्छितिः।।[१२]

अस्याः वक्रतायाः प्रथमं सौन्दर्यं अस्ति यत् एकः, द्वि बहवः वा वर्णाः वारं-वारं किञ्चिदन्तराले ग्रथिताः सन्ति। एवं प्रकारेण एकवर्णा, द्विवर्णा, बहुवर्णवृत्तिचमत्कार भेदेन प्रथमः प्रकारः त्रिविधं भवति।

वर्णविन्यासवक्रतायाः द्वितीयप्रकारः अस्ति–वर्णवृत्तिं चमत्कारभेदेन त्रिविधं स्वरूपं भवति–

(१) यत्र क–मपर्यन्ताः स्पर्शवर्णाः स्ववर्गीयान्तिमेन संयुक्तरूपेण भूयोभूय उपनिबद्धाः सन्ति।

(२) यत्र तत्कारः, लकार, नकारः आदि द्विवारं उच्चारितंभूत्वा वारं-वारं प्रयुक्ताः सन्ति।

(३) उक्ताभ्याम् उभाम्याम् भिन्नाःशेषाःवर्णाः रेफादिभिः संपृक्त्य प्रतिनिबद्धाःभूयशः भवन्ति।

वर्णविन्यासवक्रतायाः एकः अन्यः चमत्कारो भवति यत्र व्यञ्जनानां अत्यवहिते सति स्वराणाम् असादृश्येन हृदयाकर्षणम् भवति। अयं चमत्कारः वर्णानां व्यवधानयुतौ अपि भवितुं शक्यते–

**क्वचिदव्यवधानेऽपि मनोहारिनिबन्धना।**
**सा स्वराणामसारुप्यात् परं पुष्णाति वक्रताम्।।**[१३]

(२) पद पूर्वार्धवक्रतायाः द्वितीयः प्रमुखः भेदःपदपूर्वार्धवक्रता। सुप्तिङन्तं पदं। पद पूर्वार्धस्य तात्पर्यं मूलशब्देन अर्थात् प्रकृत्या सह अस्ति। सुबन्तपदस्य पूर्वार्द्धः प्रातिपदिकः तिङन्तस्य च पूर्वार्धः धातुरूपः भवति। पद पूर्वार्ध वक्रतायाः दशावान्तरभेदाः भणिताः–

(१) रूढिवैचित्र्यवक्रता, (२) पर्यायवक्रता, (३) उपचारवक्रता, (४) विशेषणवक्रता, (५) संवृतिवक्रता, (६) पदमध्यान्तर्गतप्रत्ययवक्रता, (७) वृत्तिवैचित्र्यवक्रता, (८) भाववैचित्र्य-वक्रता, (९) लिङ्गवैचित्र्यवक्रता, (१) क्रियावैचित्र्यवक्रताचेति।

(३) पदपरार्द्धवक्रता, प्रत्यय वक्रता वा–

सामान्यतः पदानाम् उत्तरार्द्धः प्रत्ययरूपोभवति। कुन्तकाचार्यः अस्य षट्प्रभेदापि प्रतिपादितः– (१) काल वैचित्र्यवक्रता, (२) कारकवक्रता, (३) संख्या वचन वक्रता वा, (४) पुरुष वक्रता, (५) उपग्रह वक्रता, (६) प्रत्यनान्तर विहितवक्रता।

आचार्यः कुन्तकः प्रत्ययवक्रता भेदान् विविच्य 'सापरा पदवक्ता' कथयित्वा उपसर्ग निपातानां वक्रतायाः पृथक्रूपेण प्रतिपादनं कृतवान्।

(४) वाक्य वक्रता–पदानां समुच्चयः वाक्यम्। आचार्ये वा वाक्यवक्रतायाः असंख्यभेदानां सम्भावना व्यक्तवान्।

**वाक्यस्य वक्रभावोऽन्योभिद्यते यः सहस्त्रधा।**
**यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।।**[१४]

(५) प्रकरणवक्रता–प्रबन्धस्य एकदेशः प्रकरणं कथ्यते। कुन्तकेन अस्य नव प्रकार प्रतिपादिताः अपरिचितेन उत्साहेन कविः स्व सहजाहार्यकौशलेन प्रकरणं यदपूर्वं उत्कर्षं उत्पादयति सा प्रकरणवक्रता भवति।

(६) प्रबन्धवक्रता–प्रबन्धस्य तात्पर्यं सम्पूर्णेभ्यः नाटकेभ्यः काव्येभ्यः वा अस्ति। कुन्तकः प्रबन्ध वक्रतायाः षट्भेदाः निरूपिताः।

संक्षेपतः आचार्यः कुन्तकः शब्दार्थयोः साहित्योपरि दृष्टिपातं अकरोत्। कुन्तकः स्वकाव्य लक्षणे तथ्यत्रयम् उपस्थापयति–

(१) सहितशब्दार्थौ सम्मिलितरूपेणकाव्यम्।

(२) एतौ शब्दार्थौ वक्रव्यापारयुक्तायाम् रचनायां आयातौ।

(३) सा रचना सहृदयाह्लादिका स्यात्।

इत्थं रूपेण कुन्तकस्य प्रतिपादितः वक्रोक्तिसिद्धान्तः अति समीचीनः सर्वमान्यश्च।

## सन्दर्भाः

१. वक्रोक्तिजीवितम्, पृ० ९१–आचार्य कुन्तक
२. वक्रोक्तिजीवितम्, पृ० ५१–आचार्य कुन्तक
३. वक्रोक्तिजीवितम्, अ० १।१०–आचार्य कुन्तक
४. वक्रोक्तिजीवितम्, पृ० ३६–आचार्य कुन्तक
५. वक्रोक्तिजीवितम्, अ० १।१० की वृत्ति–आचार्य कुन्तक
६. वक्रोक्तिजीवितम्, अ० १।३१ की वृत्ति–आचार्य कुन्तक
७. वक्रोक्तिजीवितम्, अ० १।६–आचार्य कुन्तक
८. वक्रोक्तिजीवितम्, अ० १।७–आचार्य कुन्तक
९. वक्रोक्तिजीवितम्, अ० १।१८–आचार्य कुन्तक
१०. वक्रोक्तिजीवितम्, अ० १।१९ से २१ तक–आचार्य कुन्तक
११. वक्रोक्तिजीवितम्, अ० २।९–आचार्य कुन्तक
१२. वक्रोक्तिजीवितम्, पृ० १७०–आचार्य कुन्तक
१३. वक्रोक्तिजीवितम्, अ० २।२ वृत्ति सहित–आचार्य कुन्तक
१४. वक्रोक्तिजीवितम्, अ० १।२०–आचार्य कुन्तक

□□

# वक्रोक्तिसिद्धान्तस्य उद्भवो विकासश्च

**–चन्द्रप्रकाशः**

काव्यसाहित्ये वक्रोक्तिशब्दः प्राचीनकालादेव प्रयुक्तो दृश्यते वक्रा+उक्तिः वक्रोक्तिः। सामान्यलोकव्यवहारापेक्षया तस्मिन्नेवार्थे भिन्नरूपेण शब्दस्य प्रयोगः। प्राचीनाः कवयः वाक्छलपरिहास–कथन–वचनविदग्धता–क्रीडालापेत्याद्यर्थेषु वक्रोक्तिशब्दं प्रयुक्तवन्तः। अलङ्कारशास्त्रे वक्रोक्तिशब्दस्य प्रयोगः सामान्यजनापेक्षया भिन्नः चमत्कारिकरूपेण कथनस्य प्रकारस्य अर्थः क्रियते। इयं वक्रोक्तिः काव्ये काव्यतत्त्वरूपेण, अलङ्काररूपेण जीवतत्त्व (आत्म) रूपेण वा प्रतिष्ठापिताऽस्ति।

सर्वप्रथममथर्ववेदे 'वक्र' शब्दः कुटिलार्थे प्रयुक्तः **''अय यो वक्रो विपरुर्व्यङ्ग्यो मुखानि वक्रा वृजिना कृणोषि''** इति।[१]

मेघं प्रति अलकापुर्या मार्गं निर्दिशन् मध्ये मार्गं वर्तमानामुज्जयिनीमदृष्ट्वा न गन्तव्यमिति यक्षोक्तौ **''वक्रः पन्था यदपि भवतः प्रस्थिस्योत्तरशाम्''**[२] इत्यादौ श्लोके कालिदासेन 'वक्र' शब्दः ऋजुभिन्नार्थे प्रयुक्तः।

वक्रोक्तिशब्दस्य काव्यशास्त्रीयः प्रयोगेऽलङ्कारप्रस्थानप्रवर्तकेन आद्याचार्येण भामहेन प्रथमतया कृतः। स वदति **''काव्यस्य सौन्दर्याधायकं तत्त्वमलङ्कारः''** पुनः अतिशयोक्तिः अलङ्कारस्य विषये कथयति आचार्यः **''लोकातिक्रान्तगोचरम्''**[३] अर्थात् लोकोत्तरस्यार्थस्य बोधकः यत् वचनं सा अतिशयोक्तिः वर्तते। तेन प्रतिपादितं यत् अतिशयोक्तेरपरं रूपमेव विद्यते वक्रोक्तिः।

भामहो वक्रोक्तिं सर्वेषामलङ्काराणां मूलमाह–

**सैषा सर्वत्र वक्रोक्तिः अनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।**[४]

अपरञ्च–

**''वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते''**[५]

भामहस्याभिप्रायानुसारेण वक्रोक्तिविहीनं वाक्यं काव्यं भवितुमेव नार्हति। वक्रोक्त्या रहितं वाक्यं वार्ता भवितुमर्हति। भामहो गतोऽस्तमर्कः इत्यादिकानि वाक्यानि वार्ता शब्देनाभिधत्ते। "हेतु" आद्यलङ्काराणां खण्डनसमयेऽपि भामहः वक्रोक्तिम् अलङ्काराणां मूलं स्वीकरोति–

**हेतुश्च सूक्ष्मो लेशोऽन्यूनालङ्कारतयामतः।**
**समुदार्याभिधानस्य वक्रोक्त्यनभिधानतः।।[६]**

दण्डिना काव्यादर्शे एवमभिहितम्–

**श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्।**
**भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्।।[७]**

वक्रोक्तिः स्वभावोक्तिश्चेति समस्तं वाङ्मयं द्विधा विभक्तम्। श्लेषः प्रायः सर्वासु वक्रतासु विद्यते इति तदभिप्रायः। अस्य कथनस्य तात्पर्यमिदं भवति यत् काव्ये द्विप्रकारिकायाः शैल्याः प्रयोगो दृश्यते वक्रोक्तिपूर्णा स्वभावोक्तिपूर्णा चेति। अतः दण्डिमतानुसारेण साधारणकथनभिन्ना चमत्कारपूर्णा उक्तिः वक्रोक्तिः भवति।

**वामनाचार्यः**

वामनाचार्यः वक्रोक्तिमर्थालङ्कारं मनुते "**सादृश्यलक्षणा वक्रोक्तिः**"[८] एनां वाक्छलाश्रितं शब्दालङ्कारं मन्यमानेन रुद्रटेन श्लेषकाकुभेदेनैषा द्विधा विभक्ता–

**वक्रा तदन्यथोक्तं व्याचष्टे चान्यथा तदुत्तरदः,**
**वचनं यत्पदभङ्‌गैर्ज्ञेया सा श्लेष-वक्रोक्तिः।**
**विस्पष्टं क्रियमाणादक्लिष्टास्वरविशेषतो भवति,**
**अर्थान्तरप्रतीतिर्यत्रासौकाकुवक्रोक्तिः ।।[९]**

वक्रीकृतोक्तिरिति रुद्रटेन वक्रोक्त्याः अर्थो दत्तः। रुद्रटस्य वक्रोक्तिविवेचनेन प्रभावितः सन् तस्य परवर्ती रत्नाकरः (हरविजयस्य कर्ता) वक्रोक्त्यलङ्कारस्य उदाहरणतया 'वक्रोक्तिपञ्चाशिकां' रचितवान्।

**आनन्दवर्धनः**

आनन्दवर्धनेनापि ध्वन्यालोके वक्रोक्तिर्नाम्ना न निर्दिष्टा किन्त्वनेकेषु स्थलेषु वक्रोक्तितत्त्वस्य मार्मिकं विवेचनं कृतम्। "**तत्र वक्रोक्त्यादिवाच्यालङ्कारव्यवहारः।**[१०]

**अभिनवगुप्तः**

अभिनवगुप्ताचार्यैरपि वक्रोक्तिः व्यापकार्थे स्वीकृता वर्तते। ध्वन्यालोकलोचने भामहस्य अतिशयोक्त्याः विवेचनं सर्वालङ्कारूपेण कृत्वा तामेव वक्रोक्तिः मनुते–

**"याऽतिशयोक्तिर्लक्षिता सैव सर्वा वक्रोक्तिरलङ्कारप्रकारः सर्वः वक्राभिधेय-शब्दोक्तिरिष्टावाचामलङ्कृतिः इति वचनात् शब्दस्य हि वक्रता अभिधेयस्य च**

**वक्रतालोकोत्तीर्णेन रूपेण अवस्थानम् इत्ययमेवासौ अलङ्कारस्यालङ्कारान्तरभावः।।**[११]

**भोजः**

भोजः सम्पूर्णवाङ्मयमेव वक्रोक्ति–रसोक्ति–स्वभावोक्तिभेदेन त्रिधा विभक्तवान्–

**वक्रोतिश्च रसोक्तिश्च स्वभावोक्तिश्चेति वाङ्मयम्।**
**सर्वासु ग्राहिणी तासु रसोक्तिः प्रतिजानते।।**[१२]

भोजः वक्रोक्तिमलङ्काराणां मूलतत्त्वरूपेण स्वीकृतवान्। आचार्यमम्मटः शब्दालङ्कार-विशेषत्वेन वक्रोक्तिं प्रतिपादयति। श्लेषेण काक्वा वा अर्थस्यान्यार्थस्वीकरणात् तेन श्लेषवक्रोक्तिः काकुवक्रोक्तिश्चेति द्वैविध्यमुक्तम्।

**यदुक्तमन्यथावाक्यमन्यथाऽन्येन योज्यते।**
**श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा।।**

मम्मटाचार्य इव परवर्तिभिः हेमचन्द्र–जयदेव–विद्याधर–विश्वनाथ–वाग्भट्ट–विद्यानाथादि-भिराचार्यैः वक्रोक्तिः शब्दालङ्कारविशेषत्वेनैव स्वीकृता, रुय्यकेन तु अर्थालङ्कारत्वेन। रुय्यकेनोक्तम्–

**''अन्यथोक्तस्य वाक्यस्य काकुश्लेषाभ्यामन्यथा योजनं वक्रोक्तिः।''**[१३]

उपर्युक्तदिशा यद्यपि अनेकैः प्रकारैः वक्रोक्तिः प्रतिपादिता तथापि वक्रोक्तिसम्प्रदायस्य प्रवर्तकत्वेन कुन्तकाचार्य एव परिगणितः। तत्र कारणं तु व्यवस्थितया वक्रोक्तेः प्रतिष्ठापनमेव। उपयुक्ताचार्याणामभिप्रायानाकलय्यात्यन्तं व्यवस्थितरूपेण अनेकेषु प्रकारेषु वक्रोक्तिं विभज्य सिद्धान्तरूपेण प्रतिपादितवान्। तद्विरचितः वक्रोक्तिविषयको ग्रन्थः वक्रोक्तिजीवितम्। वक्रोक्तेः स्पष्टं स्वरूपं तत्रैव वयं प्राप्तुं शक्नुमः। वक्रोक्तेः काव्यात्मत्वेन प्रतिपादनमस्य वैशिष्ट्यम्।

कुन्तकस्याभिप्राये शब्दार्थौ अलङ्कार्यौ वक्रोक्तिस्तस्यालङ्कारः। वैदग्ध्यभङ्गीभणितिरूपा वक्रोक्तेः प्रयोगः सङ्कुचितार्थे कृतः तथापि कुन्तकः तच्छब्दं व्यापकार्थे प्रयुक्तवान्। कुन्तकस्य वक्रोक्तिविवेचनं वैज्ञानिकमौचित्यपूर्णं च विद्यते। यद्यपि परिवर्तिभिराचार्यैः सिद्धान्तोऽयं लोकप्रियः न कृतः तथापि काव्यशास्त्रस्य कृते सिद्धान्तोऽयं महत्त्वपूर्णः वर्तते।

कुन्तकानुसारं वक्रोक्तिसम्प्रदायः काव्यस्य व्यापकः सार्वभौमश्च सम्प्रदायो वर्तते। स च वक्रोक्तिमलङ्कारत्वेन न वर्णितवान्, किन्तु प्रसिद्धकाव्यचिन्तनपदे तां प्रतिष्ठापितवान्। वक्रोक्तिं स्पष्टयन् कुन्तको वदति–

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।**[१४]

शब्दार्थौ अलङ्कार्यौ तथा चतुरतापूर्णशैल्या कथनरूपवक्रोक्तिः तयोरलङ्कारः। अलङ्कारशब्दः अनुप्रासोपमाद्यलङ्काररीत्या कस्यचित् विशिष्टालङ्कारस्य सूचको नास्ति। अपितु काव्ये विद्यमानस्य काव्यत्वमस्य सूचकोऽस्ति, यः सर्वत्र अलङ्करणं समर्थो भवति। कुन्तकेन वक्रोक्तिः प्रकारान्तरेण अपूर्वालङ्कारत्वेन कथितो वर्तते–**''काव्यस्यायमलङ्कारः कोऽप्यपूर्वो विधीयते''**[१५] लोकसामान्य-वचनभिन्नं विशिष्टं कथनं वक्रोक्तिरिति तदभिप्रायः। कुन्तकः इदमेवं स्पष्टी करोति–

**''वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा। कीदृशी वैदग्ध्यं विदग्धभावः कविकर्मकौशलं तस्य भङ्गीविच्छित्तिः, तया भणितिः, विचित्रैवाभिधा वक्रोक्तिरि-त्युच्यते।''**[१६]

यदि कविः सामान्यजनकथनभिन्नां लोकोत्तरचमत्कारकारिणीमुक्तिं प्रयुज्य वाक्यानि रचयति तदा वक्रोक्तिरिति कथ्यते इति कविप्रतिभाश्रितं कर्म कविव्यापार इत्युक्तं कुन्तकेन–

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।**[१७]

एवं वक्रोक्तेः विषये आलङ्कारिकाणां नैके अभिप्रायाः वर्तन्ते। केचन काव्ये तस्या आत्मस्थानीयं महत्त्वं ददति। केचन काव्यस्य सौन्दर्याधायकतत्त्वेष्वन्यतममात्रं अङ्गीकुर्वन्ति। तत्र काव्यस्यात्म-स्थानीयत्वं वक्तुं न शक्यं, काव्यस्य रसात्मकत्वस्य सर्वैरप्यङ्गीकृतत्वात्। तथापि लोकसामान्यवचसः काव्यमयवचसो भिन्नत्वे वक्रोक्तिरेव प्रमाणं भवति। अतः वक्रोक्तिरपि काव्यात्मनो रसस्य पोषकत्वेन काव्ये उपादेयैव। इति शम्।

## सन्दर्भाः


१. अथर्ववेदः ७।५८।४

२. मेघदूतम् २७

३. काव्यालङ्कारः १।११

४. काव्यालङ्कारः २।८६

५. काव्यालङ्कारः ५।६६

६.. काव्यालङ्कारः २।८६

७. काव्यादर्शः ३।३६३

८. काव्यालङ्कारसूत्रवृत्तिः ४।३।८

९. काव्यालङ्कारः २।१४।१६
१०. ध्वन्यालोकः, वृत्तिभागः २।२२
११. लोचनटीका
१२. सरस्वतीकण्ठाभरणम्, भाग २।५।८
१३. अलङ्कारसर्वस्वम् ७८
१४. वक्रोक्तिजीवितम् १।१०
१५. वक्रोक्तिजीवितम् १।१०
१६. वक्रोक्तिजीवितम्, वृत्तिभागः १।१०
१७. वक्रोक्तिजीवितम् १।७

□□

# काव्यशास्त्रे वक्रोक्तिसम्प्रदायः

-प्रशान्तकुमार मिश्रः

सहृदयाहृदयाह्लादकारिणी-काव्यपरम्परायां प्रायः काव्यतत्वज्ञाः काव्यशास्त्रस्य साहित्यशास्त्रस्य च समानार्थकत्वं स्वीकुर्वन्ति। यस्मिन् शास्त्रे काव्यसौन्दर्यस्य काव्यात्मतत्त्वस्य वा पर्यालोचनं भवति तच्छास्त्रं काव्यशास्त्रमित्यभिधीयते। शास्त्रमिदं स्वकीय ऋजुतया मृदुतया सर्वशास्त्रोपकारकत्वेन च साहित्यशास्त्रे आत्मस्थानमालभते। शास्त्रेऽस्मिन् ये काव्यात्मविषयाः सन्ति सुप्रसिद्धाः षट् सम्प्रदायास्तेष्वन्यतमो वरीवर्ति वक्रोक्तिसिद्धान्तः। संस्कृतवाङ्मये वक्रोक्तिशब्दस्य प्रयोगः प्राक्कालादेव प्रवृत्तो वर्त्तते इति अवलोक्यते। शास्त्रे व्यवहारे च शब्दार्थयोः प्रसिद्धकथनप्रकाशाद्विलक्षणा-पूर्वचमत्कारोत्पादकपद्धत्या प्रतिपादनप्रकारमेव वक्रोक्तिः कथ्यते।

अथर्ववेदे वक्रस्तथा वक्रा शब्दस्य प्रयोगः कुटिलार्थे एवाकार्षीत्-

**''अयं यो वक्रोविपरुर्व्यङ्ग्यो मुखानि वक्रा वृजिना कृणोषि।।''[१]**

कविकुलगुरुकालिदासोऽपि स्वकीये पूर्वमेघदूते 'वक्रपन्थाः' अस्मिन् प्रयोगे वक्रस्यार्थः कुटिलार्थैवकृतवानस्ति।

**''वक्रपन्थाः यदपि भवतः प्रस्थितस्योत्तराशाम्।।''[२]**

किन्तु एतेषामर्थानामतिरिक्तेआचार्यवाणभट्टस्य प्रयोगः चमत्कारपूर्णशैलीवचनविदग्धताद्यर्थेषु मिलति। अयं हि निम्नाङ्कितवाक्ययोः परिहासकथाया अर्थे वक्रोक्तिशब्दस्य प्रयोगमकरोत्।

**'वक्रोक्तिनिपुणेन विलासि जनने।'[३]**
**'एषाऽपि बुध्यते एव एतावतीर्वक्रोक्तिः।'[४]**

अमरुकेनापि परिहासकथनार्थैवास्य शब्दस्य प्रयोगः कृतोऽस्ति।

**सा पत्युः प्रथमापराधसमये सख्योपदेशं विना।[५]**
**नो जानाति सविभ्रमाङ्गबलना वक्रोक्तिसंसूचनम्।।**

एतानेव पूर्ववर्णितानर्थान् सुस्पष्टीकुर्वन् वक्रोक्तिसिद्धान्तस्य प्रवर्तकेन कश्मीरवास्तव्येण साहित्यसौहित्यमण्डितेन आचार्यकुन्तकेन प्रोक्तम्-

**'वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।'[६]**

प्राचीनकालिकालङ्कारिकाःकस्यचनातिशय कथनस्य सत्तां स्वीकृतवन्तः सामान्यजनकथन-प्रकारात्। भिन्नेन प्रकारेणकथनमेववक्रोक्तिशब्देनाभिधीयते। ऐतिहासिक्याद् दृष्ट्या अलङ्कारशास्त्रे

सर्वप्रथमं वक्रोक्तेः कल्पना भामहोऽकरोत् तस्यानुसारेण वक्रोक्तिरति शयोक्तेर्नामान्तरमात्रमास्ते। सः काव्यस्य मूलतत्त्वरूपेण वक्रोक्तिमेव स्वीकरोति।

**सैषा सर्वत्र वक्रोक्ति रचनार्थो विभाव्यते।[७]**
**यत्नोऽस्यां कविना कार्यः कोलङ्कारोऽनया विना।।**

आचार्यभामहानुसारेणालङ्कारत्वाय वक्रोक्तिः अनिवार्या भवति। वक्रोक्तिं विना कश्चनपि अलङ्कारः न भवति।

**वाचां वक्रार्थशब्दोक्तिरलङ्कारराय कल्पते।[८]**

आचार्यभामहेनालङ्कारान् मूलरूपेण वक्रोक्तिः स्वीकृताः, वामनेन सादृश्यमूललक्षणाऽर्थालङ्कार-रूपेणाभिमताः मनोरथकविना वक्रोक्तिः अलङ्कारसामान्यरूपे मन्यते यथा–

**यस्मिन्नास्ति न वस्तु किञ्चिन्मनः प्रह्लादिसालङ्कृतिः,**
**व्युत्पन्नैः रचितं च नैव वचनैर्वक्रोक्तिशून्यञ्च यत्।**
**काव्यं तत् ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो**
**नो विद्योऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः।।[९]**

लोचनकारः अभिनवगुप्तोऽस्मिन् श्लोके प्रयुक्तांशस्य 'वक्रोक्ति शून्यं च यत्' इत्यस्य व्याख्यां कुर्वन् अलिखत्–

**वक्रोक्तिरुत्कृष्टसङ्घटना। तच्छून्यमिति शब्दार्थगुणानाम्।**
**वक्रोक्तिशून्यशब्देन सामान्यलक्षणाभावेन सर्वालङ्काराभावः।।[१०]**

ध्वनिसिद्धान्तसंस्थापकाचार्येणानन्दवर्धनेन ध्वन्यालोके वक्रोक्तेः नाम्ना निर्देशः कृत्वा वक्रोक्तितत्वस्य मार्मिकविवेचनं कृतमस्ति–

**तत्र वक्रोक्त्यादि वाच्यालङ्कारव्यवहारः।[११]**

अनेनप्रकारेणानेकाचार्यैः वक्रोक्तितत्वस्य विभिन्नविधिना व्याख्या कृतास्ति किन्तु आचार्यकुन्तकेन वक्रोक्तिमेव काव्यात्मरूपेण स्वीकृतः। अतएव तस्य ग्रन्थस्य नाम वक्रोक्तिजीवितं सञ्जातम्। अयमाचार्यः स्ववैशिष्ट्यविशेषादेव आनन्दवर्धनाभिनवगुप्तयोः कोटावाटिकते। आचार्यकुन्तकः रसध्वनिभ्यां पूर्णतया परिचितासीत्। परन्तु सः तयोरन्तर्भावः वक्रोक्तिमध्यैवाकरोत्। अनेन कुन्तकेन गुणरित्यालङ्काराणां समेषामन्तर्भावः वक्रोक्तौ प्रदर्शितः। कुन्तकेन हि शब्दार्थयोः शब्दाशब्दयोः अर्थार्थयोः सामञ्जस्योपरि समधिकं बलं प्रकटितं सहितयोर्भाव एव साहित्यमित्यस्य समनयो दर्शितः।

साहित्यमनयोः शोभाशालितां प्रति काऽप्यसौ।[१२]
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः ।।

कुन्तकाचार्येण वक्रोक्तेः षट् भेदाः कृतास्ति यथा–

कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षट्।[१३]
प्रत्येकं बहवो भेदाः तेषां विच्छित्तिशोभिनः।।

तत्र प्रथमो भेदः वर्णविन्यासवक्रताऽस्ति। प्राचीन भामहाद्यालङ्कारिकैःनिरूपितोऽनुप्रासालङ्कारेव कुन्तकेन वर्णविन्यासवक्रतारूपेण प्रतिपादितः यथा–

वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता।[१४]
वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः।।

वक्रतायाः द्वितीयो भेदोऽस्ति पदपूर्वार्द्धवक्रता आचार्यकुन्तकेनास्याः नवभेदाः कृताः रूढिवैचित्र्यवक्रता, संज्ञावैचित्र्यवक्रता, लिङ्गवैचित्र्यवक्रता, क्रियार्थवैचित्र्यवक्रतादिभेदेन।

तृतीयोभेदोऽस्ति : प्रत्यायाश्रयवक्रता प्रत्ययजन्या या वक्रता सा प्रत्ययाश्रयवक्रता। अस्याऽपि बहवः प्रकाराः भवन्ति यथा–संख्यावैचित्र्यवक्रता, कारकवैचित्र्यवक्रता, पुरुषवैचित्र्यवक्रतादयश्च चतुर्थो भेदोऽस्ति वाक्यवक्रता–

वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।[१५]
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।।

पञ्चमो भेदोऽस्ति प्रकरणवक्रता–

वक्रभावः प्रकरणे प्रबन्धे वाऽस्ति यादृशः।[१६]
उच्यते सहजाऽहार्यसौकुमार्यमनोहरः।।

षष्ठभेदोऽस्ति प्रबन्धवक्रता–महाकविविरचिते महाकाव्यनाटकादौ पूर्वोक्तपञ्चविधवक्रता–सामग्रीसमुदायसुन्दरं सहृदयाहृदयहारि या प्रबन्धे वक्रभावः सा प्रबन्ध वक्रता भवति।

अनेन प्रकारेण आचार्यकुन्तकेन प्राक्कालिकाचार्याणां भामहवामनदण्ड्यानन्दवर्धनादीनां मतानां मण्डनखण्डनपूर्वकेण वक्रोक्तिरेव काव्यस्यात्मतत्वमस्त्युद्घोषपूर्वकेण काव्यशास्त्रे वक्रोक्तिसम्प्रदायस्य स्थापना कृता।

## सन्दर्भाः

१. अथर्ववेदे ७, ५८, ४–श्री विश्वनाथ शास्त्री, चौखम्भा, १९७७
२. मेघदूते पूर्व० २९–आ० शेषराज शर्मा 'रेग्मी', सुरभारती प्रकाशन, चौखम्भा, २०१३

३. कादम्बरी पूर्व–आ० शेषराज शर्म 'रेग्मी', सुरभारती प्रकाशन, चौखम्भा, १९७९
४. कादम्बरी पूर्व–आ० शेषराज शर्म 'रेग्मी', सुरभारती प्रकाशन, चौखम्भा, १९७९
५. अमरूकशतकम् २३–किशोरीलाल गुप्ता, डिजिटल लाइब्रेरी ऑफ इण्डिया, १९९६
६. वक्रोक्तिजीवितम् २।२०–श्री राधेश्याम मिश्र, चौखम्भा, १९७७
७. काव्यालङ्कारः २।८५–देवेन्द्रनाथ शर्मा, बिहार राष्ट्रभाषा परिषद्–पटना, १९६२
८. काव्यालङ्कारः ५।६६–देवेन्द्रनाथ शर्मा, बिहार राष्ट्रभाषा परिषद्–पटना, १९६२
९. ध्वन्यालोकः, प्रथम उद्योत उ०, पृ०१४–आचार्य लोकमणि दहाल, भारतीय विद्या प्रकाशन, २००१
१०. ध्वन्यालोकः लोचन, पृ० १४–आचार्य लोकमणि दहाल, भारतीय विद्या प्रकाशन, २००१
११. ध्वन्यालोकः वृत्तिः २।२२–आचार्य लोकमणि दहाल, भारतीय विद्या प्रकाशन, २००१
१२. वक्रोक्तिजीवितम् १।१७–श्री राधेश्याम मिश्र, चौखम्भा, १९७७
१३. वक्रोक्तिजीवितम् १।१८–श्री राधेश्याम मिश्र, चौखम्भा, १९७७
१४. वक्रोक्तिजीवितम् १।१९–श्री राधेश्याम मिश्र, चौखम्भा, १९७७
१५. वक्रोक्तिजीवितम् १।२०–श्री राधेश्याम मिश्र, चौखम्भा, १९७७
१६. वक्रोक्तिजीवितम् १।२१–श्री राधेश्याम मिश्र, चौखम्भा, १९७७

□□

# संस्कृतसाहित्ये वक्रोक्तेः विश्लेषणम्

–मिश्रोऽमितकुमारः

संस्कृतसाहित्यस्य षट्सम्प्रदायेषु वक्रोक्तिः अप्रतिमं स्थानं विद्यते। समग्रसाहित्यिकसम्प्रदायेषु वक्रोक्तिप्रस्थानस्य प्रवर्तकाचार्यः कुन्तकः वर्तते। तस्य प्रसिद्धो ग्रन्थः 'वक्रोक्तिजीवितम्' को नाम न वेत्ति? प्रथितेऽस्मिन् ग्रन्थे चत्वारो उन्मेषाः सन्ति। यस्मिन् वक्रोक्तेः साङ्गोपाङ्गोपस्थापनमस्ति। वक्रोक्तेः आभ्यन्तरे एव समग्रसाहित्यिकतत्त्वानां अन्तर्विधानं कृत्वा कुन्तकाचार्येण परिणतप्रज्ञायाः परिचयः प्रदत्तः।

कुन्तकाचार्यः वक्रोक्तिसम्बन्धिनीं धारणां स्पष्टीकर्तुं विविधपर्यायवाचिशब्दानां प्रयोगोऽपि कृतः–

(१) वक्रः–शास्त्रादि–प्रसिद्ध शब्दार्थोपनिबन्ध व्यतिरेकी।

(२) वक्रोक्तिः–वैदग्ध्यभङ्गीभणितिः।

(३) वक्रोक्तिः–प्रसिद्धाभिधानव्यतिरेकिणी।

(४) विचित्रैवाभिधा वक्रोक्तिः।

(५) वक्रत्वं वक्रभावः–प्रसिद्धप्रस्थानव्यतिरेकिणा वैचित्र्येणोपीनिषद्।

(६) सकलालङ्कार सामान्यम्।

(७) स्वभावस्याञ्जसेन प्रकारेण परिपोषमेव वक्रतायाः परं रहस्यम्।

अस्याः वक्रोक्तेः प्रादुर्भावः रससिद्धान्तादारभ्य औचित्यं यावद् सतत् प्रचलति। केवलं न साहित्यविदा अपितु अन्यशास्त्रविदोऽपि वक्रोक्तिसिद्धान्तं सम्यक्तया स्वीकुर्वन्ति। वक्रोक्तिजीविते ग्रन्थे उपमादिसर्वेषामलङ्काराणां अन्तर्भावः वक्रोक्तौ एव समाहितः–

वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।[१]
यत्रालङ्कारवर्गोऽसौ सर्वोप्यन्तर्भविष्यति।।

तयोः पुनरलङ्कृतिः वक्रोक्तिरेव।[२]

काव्यस्वरूपनिरूपणे तत्र–

शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।[३]
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।

वाचको वाच्यश्चेति द्वौ शब्दार्थौ सम्मिलितौ काव्यम्। तस्मादपि द्वयोः प्रतितिलंतैलमिव तद्विदाह्लादकारित्वं वर्तते न पुनरेकस्मिन् वक्रोक्तिः काव्यस्य जीवनाधायिका वर्तते। सत्यमेवोक्तम्

कुन्तकाचार्येण–**'वक्रोक्तिः काव्यजीवितम्।''**

संस्कृतसाहित्ये वक्रोक्तिशब्दस्य परम्परा आदिकालादेव दरीदृश्यते। वक्रा + उक्तिः = वक्रोक्तिः। साधारण लोकव्यवहारापेक्षया तस्मिन्नेवार्थे भिन्नस्वरूपे शब्दस्य प्रयोगः। इयं वक्रोक्तिः काव्ये काव्य तत्त्वरूपेण अलङ्काररूपेण जीविततत्त्वेन स्थापिता वर्तते।

वक्रोक्तिः शब्दस्य काव्यशास्त्रीयः प्रयोगोऽलङ्कार प्रस्थानप्रवर्त्तकेन भामहाचार्येण प्रथमतया कृतः। तेनोक्तम्–'काव्यसौन्दर्याधायकतत्त्वमलङ्कारः।' न कस्याप्यलङ्कारस्यास्तित्वं वक्रोक्तिं विना भवति इति। यथा–

**सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**[४]
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।**

आचार्यदण्डिनापि इत्थमभिहितम्–

**श्लेषः सर्वासु पुष्णाति प्रायोवक्रोक्तिषु श्रियम्।**[५]
**भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्।।**

दण्डिमतौ सम्पूर्णसंस्कृतवाङ्मयं भागद्वये विभक्तमस्ति–स्वभावोक्तिः वक्रोक्तिश्चेति। तत्र तेन जाति–गुण–क्रिया–द्रव्यरूपाणां पदार्थानां स्वाभाविकवर्णने स्वभावोक्तिः स्वीकृता। स्वभावोक्तिभिन्नाः सकला; अपि चमत्कृतियुक्ता उक्तयो वक्रोक्तिमध्ये गणिताः। उपमादयोऽलङ्कारा अपि तत्रैव समायान्ति। अस्यां वक्रोक्तौ श्लेषेण शोभा वर्द्धते। भामह इव दण्डी अपि–वक्रोक्ति–विशेषोक्त्योरभेदं प्रतिपादयामास। पर स्वभावोक्तेः ततो भिन्नतां प्रतिपादितवान्।

मनोरथकविना–वक्रोक्तिः अलङ्कारसामान्यरूपः। भोजराजेन अन्यैराचार्यैः प्रतिपादितानां वक्रोक्तिलक्षणानामुल्लेखो कृतः–

**यद वक्रं वचः शास्त्रे लोके च वच एव तत्।**[६]
**वक्रं यदर्थवादादौ तस्य काव्यमिति स्मृतः।।**

वैचित्र्यं नाम कविकौशलम्, तस्य भङ्गी भणितिः। शब्दार्थयोः सहितयोः भावः साहित्यम् विशिष्टं वक्रत्वं नामअभिप्रेतम्। वक्रोक्तिरेव आत्मतत्त्वं काव्यस्य कुन्तकाचार्येण लिखितम्–

**विचित्रा यत्र वक्रोक्तिः वैचित्र्यं जीवितायते।**
**परिस्फुरति यस्यान्तः सा काव्यातिशयाभिधा।।**
**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्धभङ्गीभणितिरुच्यते।।**[७]

षड्विधा वक्रोक्तिः कुन्तकाचार्येण प्रतिपादिताः–

(१) वर्ण विन्यास वक्रता, (२) पदपूर्वार्द्धवक्रता, (३) प्रत्यय वक्रता, (४) वाक्य वक्रता, (५) प्रकरण वक्रता, (६) प्रबन्धवक्रताश्चेति।

वक्रोक्तिरियं संस्कृतसाहित्ये पदे–पदे प्रस्फुरति। यथा–

जयदेवस्य प्रथिते गीतिकाव्ये गीतगोविन्दे वर्णविन्यास–वक्रतायाः उदाहरणम्–

ललितलवङ्गलतापरिशीलनकोमलमलयसीमरे,[८]
मधुकरनिकरकरम्बितकोकिलकूजितकुञ्जकुटीरे।
विहरति हरिरिह सरसवसन्ते नृत्यति-
युवतिजनेन समं सखि विरहिजनस्य दुरन्ते।।
उन्मदमदनमनोरथपथिक–वधूजनजनित–विलापे।
अलिकुल संकुलकुसुमसमूहनिराकुल–बकुलकलापे।।

अत्र सर्वेषु पद्येषु वर्णानां विन्यासः अतीव चमत्कारेण विनियोजितः। पद्ये वर्णानि वारं–वारं प्रयोगेण एतस्य वक्रता तथा च भिन्नरूपेण वैचित्र्येण शब्दशोभातिशयेति चमत्कारेण प्रतिपादितम्।

महाकविराजशेखरविरचिता "**विद्धशालभञ्जिका**" तः प्रस्तुतानि उदाहरणानि दत्तानि। तेन बालरामायणे प्रकरणवक्रतायाः उदाहरणं यथा–

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने–जने।[९]
नमः श्रृङ्गारबीजाय तस्मै कुसुमधन्विने।।

महाकविहर्षस्य रत्नावलीनाटिकायां वक्रोक्तेः पदपूर्वार्ध वक्रतायाः अष्टभेदेषु विशेषण वक्रतायाः उदाहरणम् यथा–

देवि! त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा।[१०]
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम्।।

सारांशरूपेण कथ्यते यत् वक्रोक्तिविरहितं काव्यं नीरसं भाति। अतएव कुन्तकाचार्येण षट् सम्प्रदायेषु अस्याः वक्रोक्तेः महिमा आमुक्तकण्ठेन प्रतिपादितः। इयं वक्रोक्तिः काव्ये–लोकेऽपि यथा–तथा सर्वत्र येन केनापि प्रकारेण लोचनगोचरी भवति। इति शम्।

## सन्दर्भाः

१. वक्रोक्तिजीवितम् १।२०
२. वक्रोक्तिजीवितम् १।१०

३. वक्रोक्तिजीवितम् १।७

४. भामह–काव्यालङ्कारः २।८५

५. काव्यादर्शः २।३६३

६. शृङ्गारप्रकाशः ९।६०

७. वक्रोक्तिजीवितम् १।१०

८. गीतगोविन्दे १।३।२३

९. बालरामायणे ५

१०. रत्नावल्याम् १।२५

□□

# आचार्यकुन्तकः वक्रोक्तिसिद्धान्तश्च

–डॉ० रामचन्द्र शुक्लः

संस्कृतसाहित्यशास्त्रे वक्रोक्तिशब्दस्य प्रयोगः अतिप्राचीनकालादेव समायाति स्म। बाणभट्टेन कादम्बर्यां वक्रोक्तिशब्दस्य प्रयोगः नैकशः कृतः। तेन अस्य शब्दस्य प्रयोगः क्रीडालापस्य परिहासकथायाः वा अर्थे कृतः। अमरूकशतकेऽपि अस्य शब्दस्य प्रयोगः सूक्त्यर्थे दरीदृश्यते।

वक्रोक्तेः शाब्दिकः अर्थः भवति वक्रा उक्तिः। काव्यस्य उक्तिः साधारणजनानां कथमपि प्रकारे भिन्नम् अथ च अत्यन्तचमत्कृतिः भवेत्। इयमेव वक्रोक्तिः। ऐतिहासिकदृष्ट्या अलङ्कारशास्त्रे वक्रोक्तेः कल्पना भामहेन कृता। भामहस्तु वक्रोक्तिः अतिशयोक्तेः एव अपरं नाम मनुते। अमुमेव काव्यमूलतत्त्वं स्वीकरोति। अनेनैव कारणेन स अलङ्कारेभ्यः वक्रोक्तेः स्थितिः अपरिहार्या इति मनुते।

'वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते' अर्थात् वक्रात् कथनम् शब्देभ्यः अलङ्कारस्य कार्यं करोति अभिनवगुप्तस्य दृष्ट्या वक्रोक्तेः लक्षणम् इत्थम्–

**''शब्दस्य हि वक्रता, अभिधेयस्य च वक्रता, लोकोत्तीर्णेन रूपेण अवस्थानम्''**
भावार्थः अयम् यत् लोके यस्य शब्दस्य अर्थस्य च व्यवहारः यस्मिन् रूपे भवति। तस्मिन् रूपे न भूत्वा तस्माद् विलक्षणम् रूपं वक्रोक्तिः भवति। आचार्यः दण्डी सम्पूर्णं वाङ्मयं द्विविधम् व्यवस्थापयति–(१) स्वभावोक्तिः, (२) वक्रोक्तिश्च।

स्वभावोक्तेः अन्तर्गतं तेषां स्थलानां अन्तर्भावः क्रियते यस्मिन् वस्तुनः यथार्थकथनम् विद्यते। स्वभावकथनेन यथार्थ–कथनेन वा भिन्ने सति वक्रोक्त्याम् अतिशयकथनस्य समावेशः कृतः। अनेन प्रकारेण उपमादयः अर्थालंकाराः अथ च रसवद् प्रेयादि रससम्बद्धाः अलङ्काराः वक्रोक्तेः सरणौ समायान्ति। आचार्यवामनेनापि वक्रोक्तेः वर्णनम् कृतं परं च तेन वर्णिता वक्रोक्तिः भामहेन प्रदर्शिता वक्रोक्त्या नितान्तं भिन्ना। यत्र भामहः वक्रोक्तिं अलङ्काराणां सामान्यमूलभूताधारं मन्यते तत्रैव वामनः ताम् अर्थालङ्कारेषु परिगणयति। तस्य दृष्ट्या वक्रोक्तिः सादृश्योपरि आश्रयमाणा लक्षणैवास्ति। लक्षणायाः अनेके आधाराः भवितुम् शक्यन्ते। परं च सादृश्याधारे पराश्रिता लक्षणा वक्रोक्तिः निगद्यते।

**''सादृश्याल्लक्षणा वक्रोक्तिः।''**

आचार्यरुद्रटस्य काले तु वक्रोक्तिः एकः शब्दालङ्कारः निर्मीयते। अर्थात् कस्यचिद् वाक्यं श्रुत्वा श्रोता तस्य कस्यचिद् शब्दम् भिन्नार्थेषु गृहीत्वा यदा अवांछितम् अकल्पितम् च उत्तरयति तदा रुद्रटानुसारेण वक्रोक्तिः भवति। परं च वक्रोक्तिसम्प्रदायस्य प्रवर्तकस्य आचार्यकुन्तकस्य

वक्रोक्तिः सर्वथा विलक्षणा। ते इमाम् अलङ्कारं न स्वीकृत्य काव्यस्य आत्म-स्थानीयम् मन्यन्ते। तस्य वक्रोक्तेः लक्षणं इदम्-

**''वैदग्ध्यभङ्गी भणितिः।''**

वक्रोक्तेः स्वरूपं प्रतिपायदन् कुन्तकः आह-

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गी भणितिरुच्यते।।**[१]

एव वक्रोक्तिर्वचोभङ्गिमा। एषा वचोभङ्गिमा एव उक्तौ शोभाम् आदधाति। चमत्कृतेश्चारुतायाश्च उक्तौ सम्पादनं वक्रोक्त्या सम्भाव्यते। अतः वक्रोक्तिः काव्यजीवितम्। निर्जीवमेव वक्रोक्तिहीनं काव्यं। उक्तेः वैचित्र्यं चमत्कृतिर्वा वक्रोक्तिः। एषा सा विशेषता काव्यप्रतिभा मूलैव। कस्मिंश्चिद् यत्र वर्ण्यविषये तस्य कस्यचिद् धर्मस्य गुणस्य वाऽतिशयेनोक्तिः वैचित्र्येण विच्छित्या वा प्रतिपादनं तत्र वक्रोक्तिः। कुन्तको आह-

**''यस्मादर्थप्रतीतिकारित्वात् उपचारात् तावपि वाचकावेव। एवं द्योत्यव्यङ्ग्ययोरर्थयोः प्रत्येयत्वसामान्यदुपचारात् वाचत्वमेव।'' वाचकत्वस्य इत्यर्थः-''कविविवक्षितविशेषा-भिधानक्षमत्वमेव वाचकत्वलक्षणम्।''**

वक्रोक्तिसम्प्रदायस्योद्भवो एव ध्वनि सम्प्रदायमूलकः। आनन्दवर्धनाचार्यप्रतिपादितेन ध्वनिसिद्धान्तेन आप्तम् नैराश्यम्। अलङ्कारवादिनः अलंङ्कारेषु काव्यस्य मूलतत्त्वम् अन्वेषयन्तो वक्रोक्तिं समासादयन्। अस्य सम्प्रदायस्य प्रतिष्ठापकः आचार्यः कुन्तकः। अस्मिन् विषये तद् विरचितः प्रामाणिकोग्रन्थः वक्रोक्तिजीवितम्। आचार्यभामहेन अस्य वक्रोक्तिसिद्धान्तस्य उद्भवः प्रारभ्यते। स समग्रमपि काव्यवैशिष्ट्यं अलङ्कारे च सङ्गृह्णाति। अतिशयोक्तेः प्राधान्यं सर्वत्रापि निरीक्ष्यते। ध्वनिवादेऽपि ध्वनिः अतिशयोक्तिमूलक एव। अतिशयोक्तेः अनिवार्यतत्त्वम् वक्रोक्तौ अपि। एतदेव प्रतिपादयता भामहेनोच्यते-

**सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।**
**यत्रोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।**[२]

भामहः अतिशयोक्तिं वक्रोक्तिं च पर्यायत्वेन गणयति। सैषा अत्र अतिशयोक्तिरेव वक्रोक्तिः इत्यर्थः। अनयैव अर्थस्य अभिव्यक्तिः भवति। अतिशयोक्तिमूला वक्रोक्ति एव। भामहाभिमतेन वक्रोक्तिः सर्वालङ्काररूपा। एतत् सर्वेषाम् अलङ्काराणां मूलम्। अनया अर्थाभिव्यक्तिः एव वक्रोक्तिरेव काव्यत्वं सम्पादयति। एषा सा सर्वालङ्काररूपा। वक्रोक्तिः काव्ये समस्त-सौन्दर्याधायिका। एवं वक्रोक्तिः काव्यस्यात्मा इति भामहाभिमतेन-

**श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्।**
**द्विधा भिन्नं स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्।।**[३]

दण्डी काव्यशोभाकरान् सर्वान् धर्मान् निधत्ते अलङ्कारान्तर्गतं। सर्वेऽपि अलङ्काराः वक्रोक्ते अन्तर्भूता इति दण्डिना व्याख्याताः।

**''काव्यशोभाकरान् धर्मान् अलङ्कारान् प्रचक्षते।''**

**यच्च सन्ध्यङ्ग-वृत्त्यङ्ग-लक्षणाद्यागमान्तरे।**
**व्यावर्णितमिदं चेष्टम् अलङ्कारतयैव नः।।**[४]

भामहात् दण्डिनश्च प्रेरणाम् अवाप्य कुन्तको स्वभावोक्तावपि वक्रोक्तिदर्शनं कुरुते। वक्रोक्तेः क्षेत्रं च यावद्वर्ण्यविषयं विस्तारयति। सर्वेऽपि धर्मा वक्रोक्तिजन्या एव काव्यशोभाकराः। यत् कुन्तको वक्रोक्तेमर्हत्वं प्रभावं चमत्कृतिं च अलङ्कार-वादिभ्य एवगृह्णात् इति स्फुटं ज्ञायते। आनन्दवर्धनोऽपि वक्रोक्तिं समर्थयति। तन्मतानुसारं '**काव्यस्यात्मा ध्वनिः**'। कलाभावपक्षयोर्ध्वनिना वक्रता सम्पाद्यते। काव्यस्य सौन्दर्यं अतिशयोक्तिः विशदयति। सर्वेऽप्यलङ्कारा अतिशयोक्तौ वक्रोक्ते वा समाश्रिताः। कवि-प्रतिभा-जन्या अतिशयोक्तिः अलङ्कारेषु अत्यधिकं सौन्दर्यं वर्धयति। अलङ्कारा अलङ्कारमात्रमेव अतिशयोक्त्या वा हीना।

भामहदण्डिनोर्वक्रोक्त्या आनन्दवर्धनस्य अतिशयोक्तिः अभिन्ना अस्ति। इति तेनोच्यते ध्वन्यालोके-

**''अतिशयोक्तिर्गभता सर्वालङ्कारेषु शक्यक्रिया। कृतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्यति। तत्रातिशयोक्तिर्यम् अलङ्कारम् अधितिष्ठति कवि प्रतिभावशात् तस्य चारुत्वातिशययोगोऽन्यस्य तु अलङ्कारमात्रतैवेति। .....सैव सर्वालङ्काररूपा।''**[५]

अवरकाव्यत्वेन अतिशयोक्तिहीनं वक्रोक्तिहीनं वा काव्यं गण्यते। एतस्मात् कारणाद् अतिशयोक्तिः सर्वालङ्कारमूला मन्यते। अतिशयोक्तेः अलङ्कारान्तरैः साङ्कर्यं वाच्यत्वेन व्यङ्ग्यत्वेन च भवति इति आनन्दवर्धनाचार्यमतेन। सा सर्वेषाम् अर्थालङ्काराणां वाच्यरूपेण जननी। व्यङ्ग्यरूपेण च संयुक्ता सा ध्वनिरूपेण गुणीभूत्-व्यङ्ग्यरूपेण च विपरिणमते। ध्वन्यालोके यथोक्तं-

**''तस्याश्चालङ्कारान्तरसङ्कीर्णत्वं कदाचिद् वाच्यत्वेन, कदाचिद् व्यङ्ग्यत्वेन।।''**[६]

**''अतिशयोक्तेस्तु सर्वालङ्कारविषयोऽपि संभवति।''**

इति वदता आनन्दवर्धनेन वक्रोक्तेरपि सर्वालङ्कारविषयत्वम् उपपाद्यते। भोजराजोऽपि कुन्तकसमकालीनो वक्रोक्तिम् उपास्यते। तेनोच्यते-

यद् वक्रं वचः शास्त्रे लोके च वच् एव तत्।
वक्रं यदर्थ वादादौ तस्य काव्यमिति स्मृतिः।।

स्वकीये सरस्वतीकण्ठाभरणे भोजराजः वाङ्मयं त्रिधा विभजति–

(१) वक्रोक्तिः, (२) रसोक्तिः, (३) स्वभावोक्तिश्च। तत्र रसोक्तेः प्राधान्यं वर्ण्यते। कुन्तको वक्रोक्तौ रसोक्तौ च नान्तरं मनुते। काव्यलक्षणेऽपि वक्रोक्तेः अनिवार्यत्वं कुन्तकेन प्रतिपाद्यते–

शब्दार्थौ सहितौ वक्र-कविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।[८]

काव्यत्वं कुन्तको शब्दार्थोभयनिष्ठं मनुते। न केवलं शब्दे न चाप्यर्थे। यथा तैलं प्रतितिलं तद्वत् प्रतितिष्ठति शब्दार्थयोरपि काव्यत्वं। कुन्तकः प्रतिपादयन् आह–

कुन्तकः वक्रोक्तिं षोढा विभजति–

वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता।
वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः।।
वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।।
वक्रभावः प्रकरणैः प्रबन्धे वाऽस्ति यादृशः।
उच्यते सहजाहार्य-सौकुमार्य-मनोहरः।।[९]

अतएव वक्रोक्तेः षड् भेदाः सन्ति–(१) वर्णविन्यासवक्रता, (२) पदपूर्णार्धवक्रता, (३) पदपरार्धवक्रता, (४) वाक्यवक्रता, (५) प्रकरणवक्रता, (६) प्रबन्धवक्रता। प्रत्येकस्य भेदस्य अनेके भेदाः वर्णिताः। एतदन्तर्गतमेव भाषा, प्रकृतिवर्णनम्, चरित्रचित्रणम्, कथा संयोजनम्, ऐतिहासिकतथ्यसङ्कलनम्, वस्तुवर्णनम्, अलङ्कारविधानम्, रसप्रयोगः, काव्य-सन्देशादिकं च तथा सूत्ररूपेण उपलभ्यते येन परिवर्तिन्याः साहित्यिका समीक्षायाः सरणिः प्रशस्ता भवति। यथा–

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि।।[१०]

श्लोकेऽस्मिन् ध्वनिकारेण अत्र अर्थान्तरसंक्रमित वाच्यध्वनिः अंगीक्रियते। परं च कन्तुकस्तु रूढि वैचित्र्यवक्रतां प्रतिपादयति।

एवं कुन्तकस्य 'वक्रोक्तिः काव्यजीवितम्' इति कथनम् समीचीनम्। यथोक्तं गोपालभट्टेन–

वक्रानुरञ्जिनीमुक्तिं शुक इव मुखे वहन्।
कुन्तकः क्रीडति सुखं कीर्तिस्फटिकपिञ्जरे।।

## सन्दर्भाः

१. वक्रोक्तिजीवितम् १।१०

२. काव्यालङ्कारः २।८५

३. काव्यादर्शः-आचार्य दण्डी

४. काव्यादर्शः-आचार्य दण्डी

५. आनन्दवर्धनः-ध्वन्यालोकः ३।३७ टीका

६. आनन्दवर्धनः-ध्वन्यालोकः ३।३७ टीका

७. शृङ्गारप्रकाशः-भोजराजः

८. वक्रोक्तिजीवितम् १।७

९. वक्रोक्तिजीवितम् १।१९, २०, २१

१०. वक्रोक्तिजीवितम् २।९

□□

# महाकविबिल्हणकृतचौरपञ्चाशिकायां वक्रोक्तिः

–उत्तम सिंहः

संस्कृतकाव्यशास्त्रे प्रसिद्धेषु विविधेषु सम्प्रदायेषु कुन्तकाचार्यस्य वक्रोक्तिसम्प्रदायः अन्यतमः अस्ति। अस्य सम्प्रदायस्य प्रतिष्ठापकाचार्यः कुन्तकः अस्ति। कुन्तकस्य मते वक्रोक्तेः स्वरूपं द्विविधं भवति। प्रथमं यत्र त्रयाणां लोकानां पदार्थानां यथार्थरूपेण कथनं भवति यथा–'दैवरक्ता हि किंशुका' (पलाशपुष्पं रक्तं भवति। द्वितीयं कविः स्वबुध्यनुसारेण काव्येषु पदार्थानां स्वरूपं प्रतिपादयति यथा–मनुष्याणां त्रीणि नेत्राणि। एतयोः द्वर्योयत्समन्वितं मार्गं अस्ति तत्साहित्यसुधां आचार्यकुन्तकः वक्रोक्तेः संज्ञा दत्तवान्–

उभावेतावलङ्कार्यौ तयो पुनरलङ्कृतिः।
वक्रोतिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।[२]

आचार्यकुन्तकेन वक्रोक्तेः षड्भेदाः प्रकीर्तिताः–

कविव्यापारवक्रत्वप्रकाराःसम्भवन्ति षट्।
प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशोभिनः।।[३]

**(१) वर्णविन्यासवक्रता**–'वर्णानां विन्यासः वर्णविन्यास' अस्य अभिप्रायः अक्षराणां विशिष्टप्रकारस्य विन्यासेन अस्ति। यत्शब्दः शोभातिशयेन संवलितभूत्वा सहृदयाय आह्लादकारी भवति सा वर्णविन्यासवक्रता कथ्यते।

**(२) पदपूर्वार्द्धवक्रता**–यत्सुबन्तपदस्य पूर्वार्द्धः प्रातिपदिको भवति। तिङ्न्तपदस्य पूर्वार्द्धः धातुः भवतिः। तयोःप्रातिपदिकधातुयोाः च विन्यासवैचित्र्यं पदपूर्वार्द्धवक्रता कथ्यते। एतस्य विविधभेदाः भवितुं शक्यते यथा–(१) रूढिवैचित्र्यवक्रता, (२) पर्यायवक्रता, (३) उपचारवक्रता, (४) विशेषणवक्रता, (५) वृत्तिवैचित्र्यवक्रता, (६) लिङ्गवैचित्र्यवक्रता, (७) क्रियावैचित्र्यवक्रतादिः।

**(३) प्रत्ययाश्रयवक्रता**–प्रत्ययः सुप् तिङ् वा यस्य आश्रयः भवन्ति। तादृशी वक्रतां प्रत्ययाश्रयः पदपरार्धवक्रता वा भवति। अस्यापि विविधाः भेदाः भवितुं शक्यन्ते यथा संख्या-वैचित्र्यवक्रता, कारकवैचित्र्यवक्रता, पुरुषवैचित्र्यवक्रता।

**वाक्यवक्रता**–

वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।।[४]

पदसमुदायभूतवाक्यस्य वक्रता पदादिवक्रतया भिन्नः अस्ति। यत्सहस्रप्रकाराः भवितुं शक्यते अस्यां अलङ्काराणां सर्वसमुदायः अन्तर्भूतं भवन्ति।

**प्रकरणवक्रता–**

**वक्रभावः प्रकरणे प्रबन्धे वास्तयादृशः।**
**उच्यते सहजार्यसौकुमार्यमनोहरः।।**[५]

आचार्यकुन्तकेन प्रतिपादितवक्रता कविबिल्हणकृतचौरपञ्चाशिकायां काव्ये यत्र तत्र दृश्यते महाकवेर्बिल्हणस्य कृतिषु चौरपञ्चाशिकायाः संस्कृतजगति प्रसिद्धिरधिका सञ्जाता।

श्रीदुर्गाशङ्करशास्त्रिणा तु पञ्चाशिकायाः कृतिऽत्वे एवं सन्देहमुपनीय संस्कृत-विचारकाणां समक्षं समस्या प्रस्तुता। तस्य मते चौरपञ्चाशिका कवेर्बिल्हणस्य रचना नैव भवितुं अर्हति अस्य मतस्य सम्पुष्टौ यः श्लोकः चौपञ्चाशिकायाः पाण्डुलिपेः अन्ते उल्लिखितः–

**श्रीमद्विक्रमधीरराजकुमुदः चन्द्रप्रकाशकृतः।**
**भूतं वेदयुगं च चन्द्रसहितं अब्देगते संख्यया।।**
**एते अब्दगतेऽपि चौरकविना काव्यं कृतं संग्रहः।**
**श्रीमत्पण्डितधीरसत्सुधिकविः श्रीभट्टपञ्चाननः।।**

श्लोकेऽस्मिन् पञ्चाशिकायाः रचनाकालः विक्रमसंवत् १४४५ इति कथितः श्लोकस्य चान्तिमपङ्क्तौ उल्लिखितं नाम चौरकवेरेव नाम इति कथितम्।

इयं कृतिः नैकभाषासु अनूदिता जाता। ख्रीष्टाब्दस्य षोडशतमे शताब्दे कर्वेजीवनवृत्तसहितं शशिकलाविरहप्रतापः इति पुस्तकं गुर्जरभाषायां प्रकाशितम्। जैनकविः ज्ञानाचार्यः बिल्हणकाव्यस्य शशिकलाकाव्यस्य च रूपान्तरं अपभ्रष्टसंस्कृतं प्रस्तुतवान्। कविना विट्ठलेन शकसंवते १५९९ तमे वर्षे मरहट्टभाषायां अस्य अनुवादः प्रस्तुतः। कविबिल्हणकृतचौरपञ्चाशिका काव्येतिहाससङ्ग्रहे प्रकाशितो जातः।

अस्मिन् काव्ये राजकन्यया सह गुप्तप्रेमवर्णितम्। कविः राजपुत्र्याः शिक्षकः आसीत्। द्वयोः प्रणयस्य वार्तां ज्ञात्वा मृत्युदण्डः आदिष्टः कवये वधाय स आकृष्टः। परन्तु तस्य मार्मिक पद्यानां पाठेनअस्मिन् राजपुत्र्याः गुप्तप्रणयस्य आनन्दप्रसङ्गः वर्णितः आसीत्। प्रभावितो राजा विगलितहृदयः सन् राजकन्यायाः विवाहाय तमादिशत्।

अस्मिन् काव्ये वक्रोक्तिः पदे-पदे प्रस्फुरति। तासां वर्णनमधोवत्–

**'दशनखण्डनमण्डनं च'**[६] पङ्क्तावत्र न वर्णस्य आवृत्तिः विशिष्टसौन्दर्यं प्रकटयति। इयं क्रिया दम्पतेः वासनातिशयतां द्योतयति। यत् हि बिल्हणस्य कामशास्त्रविशदतां प्रकटयति।

**'मुक्ताफलप्रचयचुम्बितचूचुकाग्रम्'**[७] अत्र 'च' वर्णस्य आवृत्ति एव सौन्दर्यधायिकास्ति। चुम्बनं तु प्राणिभिरेव सम्भवति किन्तु मुक्ताफलप्रचयस्य चुम्बनं सौन्दर्यानुरागं जनयति।

**'तन्नयनकज्जलमुज्जवलास्यम्'**[८] 'ज्ज' वर्णयोः आवृत्तितः चिन्ताकर्षिकः वर्ततेऽत्र कज्जलस्य वर्णस्तु कृष्णो भवति किन्तु कज्जलेऽपि उज्ज्वलतायाः प्रतिपादनं तु कवेः विशिष्टबुद्धिमत्तायाः परिचायकमस्ति।

**'तत्कमलरेणुसुगन्धगन्धि तत्प्रेमवारि-मकरध्वजपातकारि'**[९] अत्र गन्धशब्दस्य द्विधा-प्रयोगस्तथा च 'र' इत्यस्य पुनः पुनः आवृत्तिः श्लोके अपूर्वसौन्दर्यं प्रतिपादयन्ति। 'सुगन्ध' शब्द एव स्वतो वातावरणे मोहकतामुपलाति तथापि सुगन्धस्य गन्धः इति सङ्कथनेन अतिशयमनोहरता अभिव्यञ्जते। अत्र कविना नायिकायाः शरीरमेव तीर्थं उच्यते। तस्य प्रेम एव जलमस्ति। तस्याः सुरततीर्थे कामदेवस्यापि पापानि विमलीभवन्ति।

**'नानाविचित्रकृतमंडनमंडिताङ्गी'**[१०] श्लोकेऽस्मिन् 'न म ङ' वर्णानामावृत्तिः वर्णविन्यास वक्रतायाः उदाहरणमस्ति। नायिकायाः वैशिष्ट्यं वर्णितं यत् सा विविधाभूषणैः सुमण्डिता सुशोभिता चास्ति। अत्र नखक्षतानि एव तस्याः विचित्राभूषणानि कल्पितानि सन्ति।

**तत्सुरतकेलिनिरस्तयुद्धं बन्धोपबन्धापतनोत्थित शून्यहस्तम्।**
**दन्तौष्ठपीडननखक्षतरक्तसिक्तं तस्याः स्मरामि रतिबन्धुरनिष्ठुरत्वम्।।**[११]

श्लोकेऽस्मिन् 'न्ध' 'त' 'न' 'क्त'–इत्येषां वर्णानामावृत्तिः विशेषसौन्दर्यं जनयति अत्र कामशास्त्रविषयकं विशिष्टज्ञानं सन्निहितं वर्तते। इदं हि अतिशयोद्दामावस्थायां चित्रणं प्रतिभाति।

**अद्यापि तां निधुवनक्लमनिसहाङ्गिमापाण्डुगण्डपतितालककुन्तलालिम्।**
**प्रच्छन्न पापकृतमन्थरमावहन्ती काष्ठावसक्तमृदुबाहुलतां स्मरामि।।**[१२]

श्लोकेऽस्मिन् 'प्रच्छन्नपापकृत' शब्दः विशिष्टं अभिप्रायं व्यञ्जयति। नायिकायाः कम्पनस्य कारणं प्रच्छन्नपापजन्यभयोऽस्ति। अत्र रुढिवैचित्र्यवक्रताया द्वितीयो भेदः प्रकटितः।

**'नखरक्षतलक्ष्य'**[१३] अनेन पदेन नायिकायाः लज्जा प्रकटिता अस्ति। सुरतकाले वासनावेगवशात् नायकस्य नक्षखतं सुरतानन्तरं वीक्ष्य नायिका लज्जामनुभवति। वर्णनेऽस्मिन् विशेषसौन्दर्यं प्रकटितमस्ति।

'पीयूषपूर्णकुचकुम्भयुगम्'[१४] श्लोकेऽस्मिन् कविना अमृतपूर्णकुचकुम्भद्वयस्य वाहिकेति वर्णिता नायिका। तादृशसुखस्य समक्षं स्वर्गसुखं अपवर्गसुखं वापि हेयमेव अनुभूयते नायकेन। पद्यं इदं नायिकायाः सौन्दर्यातिशयं ध्वनयति।

'अद्यापि तां चम्पकदामगौरीं फुल्लारविन्दवदनां तनुरोमराजिम्'[१५] पद्येऽस्मिन् 'गौरीं' पदं पर्यायवक्रत्वमाहवति श्वेतवर्णा श्वेताङ्गना इत्यादयः पर्यायशब्दाः सन्ति। सत्स्वपि पर्यायेषु गौरीति पदं विशेषलावण्यं संवहति। श्लोकेऽस्मिन् प्रयुक्तं शब्दशृङ्खला स्वव्यञ्जनबलेन कवेः अन्तःस्थान् कोमलभावान् वहिः निःसार्य प्रकटीकरोति कनकचम्पकफुल्लारविन्द इति शब्दाः विशेषणवक्रतां जनयन्ति।

तां सुरतजागरघूर्णमानतिर्यग्वलतरलतारकमायताक्षीम्।
शृङ्गाररसारकमलाकरराजहंसीं क्रीडाविनम्रवदनामुषसि स्मरामि।।[१६]

श्लोकेऽस्मिन् राजहंसी शृङ्गाररसार इत्यादयः शब्दाः नायिकाया विशेषणत्वेन काव्ये विशेष चारुतां प्रतिपादयन्ति। अन्येषां पर्यायाणामपेक्षया इमे शब्दविशेषा एव काव्यस्य उत्कृष्टतां जनयन्ति।

अद्यापि तां सुरतताण्डवसूत्रधारीं।
पूर्णेन्दुसुन्दरमुखीं मदविह्वलाङ्गीम्।।[१७]

अत्र हि 'सुरतताण्डवसूत्रधारीम्' इति पदं सम्पूर्णस्य अभिधेयस्तुनः अलङ्कारयोजनायां समर्थमस्ति। यथा आनन्दातिरेके भगवान् शिवः ताण्डवनृत्ये प्रवृत्तो भवति तथैव सापि बाला उन्मुक्ता सति कामातिशयवशात् रतिक्रीडायां प्रवृत्ता जाता। परं वैशिष्ट्यमस्ति यत् अस्याः क्रीडायाः सूत्रं स्वयमेव धरति अर्थात् रतिक्रीडायाः संयमनमपि तस्याः एव अधीनं भवति।

अन्तस्मितोच्छवसितपाण्डुरगण्डभित्तिं तां वल्लभामलसहंसगतिं स्मरामि।।[१८]

अत्र अलसहंसगतिनेति पदेन युज्यमानं वल्लभामिति पदं काव्ये उत्कृष्टसौन्दर्यं जनयति। सहृदयस्य च मनसि आनन्दोद्रेकमपि जनयति।

आचार्यकुन्तकः वस्तुनः उत्कृष्टं स्वाभाविकं च सौन्दर्यं वर्णयितुं वक्रतायाः प्रयोगे वस्तुवक्रतां अभिदधाति। तेन वस्तुस्वभावस्य वर्णनं वाच्येन सहैव व्यङ्ग्यमपि स्वीकृतम् एवं स्पष्टमस्ति यत् तेन वाक्यवक्रतायाः वैचित्र्यप्रतिपादने प्रमुखतया वर्णनीयवस्तुनः वक्रता प्रकाशिता। वस्तुतः चौरपञ्चाशिकायाः सम्पूर्ण एव ग्रन्थः प्रत्येकं च श्लोकाः नायिकानायकयोः मधुरमिलनस्य सर्वा अपि अवस्थाः चित्रयन्ति। यत् तेन शब्दसौष्ठवेन प्रकटीकृतम्। यथा–

**अद्यापि तां मसृणचन्दनपङ्कमिश्रकस्तूरिकापरिमलोत्थविसर्पिगन्धाम्।**
**अन्योन्यचञ्चुपुटचुम्बनलग्नपक्ष्मयुग्माभिरामनयनां शयने स्मरामि।।**[१९]

अत्र कविना स्वस्य कामकेलेः अंशभूतस्य चुम्बनस्य वर्णनं प्रस्तुतम्। परस्परम् अधरयोः मेलनेन प्रेमिकायाः नयनोन्मीलनं तस्या आनन्दानुभवं क्रीडां च द्योतयति।

**अद्यापि तन्मनसि संपरिवर्तते मे**
**रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या।**
**जीवेति मङ्गलवचः परिहृत्य कोपात्**
**कर्णे कृतं कनकपत्रमनालपन्त्या।।**[२०]

श्लोकेऽस्मिन् कविना श्रीबिल्हणेन प्रणयकोपस्य संस्मरणं चित्रितं अत्र हि मनोरम-शृङ्गारिकघटनायाः चित्रणविधा तु संस्तुत्या। जीवेतिमङ्गलवचः वचनमिदं वक्रतादृष्ट्या अतिमहत्त्वं संवहति।

**अद्यापि तां न खलु वेद्मि किमीशपत्नी,**
**शापङ्गता सुरपतेऽथ कृष्णलक्ष्मीः।**
**धात्रैव किं न जगतः परिमोहनाय,**
**सा निर्मिता युवतिरत्नानिदृदृक्षया वा।।**[२१]

अत्र सन्देहालङ्कारस्य सुन्दरमुदाहरणं कविना प्रस्तुतम्। स निश्चयेऽसमर्थः प्रतीयते यत् प्रिया कस्य रूपमस्ति। सा न कापि सामान्यास्त्रीति सम्भवति।

**अद्यापि तत्कमलरेणुसुगन्धगन्धि,**
**तत्प्रेमवारि मकरध्वजपातकारिः।**
**प्राप्नोम्यहं यदि पुनः सुरतैकतीर्थं,**
**प्राणांस्त्यजामि नियतं तदवापितहेतोः।।**[२२]

अत्र कवेः कल्पना अतीव मनोहारिणी अस्ति नात्र संशयः। नायिकायाः सम्पूर्णशरीरमेव तीर्थवत् कल्प्यतेऽत्र। तीर्थे जलं भवति अत्र शरीरतीर्थे तस्याः नायिकायाः प्रेम एव जलं कल्पितम्। तस्या मुखकमलस्य सुगन्धिना तीर्थमिदं सम्मूर्च्छितम्। तीर्थजले स्नानात् जनानां पापं न्यूनीभवति। तस्याः सुरततीर्थे स्नानात् मकरध्वजस्य कामदेवस्य पापं अपसरति इति कल्पना मनोहारिणी विद्यते।

आचार्यकुन्तकेन प्रतिपादितवक्रोक्तिस्वरूपस्य कविबिल्हणः स्वकाव्ये चौरपञ्चाशिकायां

अत्यधिकं प्रयोगं कृतवान्। तेषां सर्वेषां ज्ञानप्राप्त्यर्थं चौरपञ्चाशिकानामककाव्यस्य अनुशीलनं करणीयम्।

## सन्दर्भाः

१. वक्रोक्तिजीवितम्, कारिका ७
२. वक्रोक्तिजीवितम्, कारिका १०
३. वक्रोक्तिजीवितम्, कारिका १८
४. वक्रोक्तिजीवितम्, कारिका २०
५. वक्रोक्तिजीवितम्, कारिका २१
६. चौरपञ्चाशिका, श्लोक १३
७. चौरपञ्चाशिका, श्लोक १४
८. चौरपञ्चाशिका, श्लोक ४०
९. चौरपञ्चाशिका, श्लोक ४२
१०. चौरपञ्चाशिका, श्लोक ४६
११. चौरपञ्चाशिका, श्लोक ४८
१२. चौरपञ्चाशिका, श्लोक ४
१३. चौरपञ्चाशिका, श्लोक १५
१४. चौरपञ्चाशिका, श्लोक १९
१५. चौरपञ्चाशिका, श्लोक १
१६. चौरपञ्चाशिका, श्लोक ३
१७. चौरपञ्चाशिका, श्लोक ७
१८. चौरपञ्चाशिका, श्लोक १४
१९. चौरपञ्चाशिका, श्लोक ८
२०. चौरपञ्चाशिका, श्लोक ११
२१. चौरपञ्चाशिका, श्लोक ३९
२२. चौरपञ्चाशिका, श्लोक ४२

## सन्दर्भ-ग्रन्थ-सूची

१. वक्रोक्तिजीवितम्—कुन्तकः राधेश्याम मिश्रः, चौखम्भाप्रकाशन, वाराणसी, १९६७
२. ध्वन्यालोकः—आनन्दवर्धनः, डॉ० नागेन्द्रः, विश्वेश्वर, ज्ञानमण्डल लिमिटेड, वाराणसी, १९६२
३. काव्यादर्शः—दण्डी, सम्पादक योगेश्वर शर्मा, नाग पब्लिशर्स, जवाहर नगर, दिल्ली १९९९
४. नाट्यशास्त्रम्—भरतमुनि, सम्पादक डॉ० आर०एस० सागर, परिमल पब्लिकेशन्स, दिल्ली
५. दशरूपकम्—धनञ्जयः, सम्पादक श्रीनिवासशास्त्री, साहित्य भण्डार, सुभाष बाजार, मेरठ, १९२९

६. रसगङ्गाधरः–पण्डितराजजगन्नाथ, सम्पादक मन्दमोहन झा, चौखम्भा विद्या भवन, वाराणसी १९०५

७. शृङ्गारप्रकाशः–भोजराज, सम्पादक रेवाप्रसाद द्विवेदी, इन्दिरा गाँधी राष्ट्रीयकलाकेन्द्रम्, नई दिल्ली, २००७, कालिदास संस्थानम्, वाराणसी

८. काव्यप्रकाशः–आचार्यमम्मट, सम्पादक थानेशचन्द्र उप्रैति, परिमल पब्लिकेशन्स, दिल्ली, २००३

९. साहित्यदर्पणः–आचार्यविश्वनाथ, सम्पादक योगेश्वरदत्त शर्मा पाराशरः, नाग पब्लिशर्स, ११ ए०यू०ए०, जवाहर नगर, दिल्ली–११०००७, २०००

□□

# दण्डीमते वक्रोक्तिः

–अल्पना वर्मा

संस्कृतसाहित्ये वक्रोक्तेः विशिष्टं स्थानमस्ति। वक्रोक्तेः सूत्रपातः षष्ठ्यामेव शताब्द्यां भामहेन कृतः किन्तु सिद्धान्तरूपेण आचार्यकुन्तक एव प्रतिष्ठापकः। काव्यस्यात्मा वक्रोक्तिरिति कुन्तकेनोक्तम्– वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा कीदृशी वैदग्ध्यभङ्गी भणतिः? वैदग्ध्यं विदग्धभावः, कविकर्म कौशलम्। तस्यभङ्गी विच्छित्तिः तथा भणितिः विचित्रैवाभिधा वक्रोक्तिरित्युच्यते। तदनुसारेण वक्रोक्तेरभिप्राय; विचित्रा अभिधा अर्थात् उक्तिः। विचित्रस्य भावात्मकोऽर्थः प्रसिद्धकथनशैल्याभिन्ना शैली इत्यस्ति। आचार्येण दण्डिना वक्रोक्तेः महत्त्वं प्रदीयते। तेन वक्रोक्तेः परीक्षणस्य प्रयासः कृतः। किन्तु भामह इव तेन सुस्पष्टं विवेचनं नैव प्रस्तुतः। अलङ्कारविशिष्टेन न कुत्रापि वक्रोक्तेरुल्लेखः कृतः दण्डिना। तस्य सम्पूर्णे एव ग्रन्थे वक्रोक्तिशब्दस्य प्रयोगः एकस्मिन्नेव स्थले प्राप्यते। स श्लेषं वक्रोक्तेः शोभाधायकं तत्त्वं स्वीकरोति, सहैव वाङ्मयस्य भागद्वयं स्वभावोक्तिः वक्रोक्तिश्च उक्तं तेन यत्–

**श्लेषः सर्वासु पुष्णाति प्रायो वक्रोक्तिषु श्रियम्।**
**भिन्नं द्विधा स्वभावोक्तिर्वक्रोक्तिश्चेति वाङ्मयम्।।**[१]

अत्र वक्रोक्तेस्तात्पर्यम् उक्तिवैचित्र्यमूलकैरलङ्कारैरेव।[२] उपर्युक्तकारिकायां प्रायः पदस्य प्रयोगेऽयमाशयो विद्यते यत् उक्तवैचित्र्यमूलकेषु (वक्रोक्तिषु) सर्वेष्वेव अलङ्कारेषु श्रीवृद्धे कारणं श्लेष एव न भवति। श्लेषः प्रायशः अलङ्कारेषु शोभावृद्धिं सम्पादयति किन्तु न सर्वेषु।

**उपमारूपकाक्षेपव्यतिरेकिदीपकादयुक्तिवैचित्र्यमूलकेषु**
**अलङ्कारेषु श्लेषः शोभाधायकत्वेन तिष्ठति।।**

आचार्यो दण्डी वाङ्मयं द्विधा विभजते। वाङ्मयान्तर्गतं तु वाचः सर्वे एव प्रपञ्चाः समायान्ति। शास्त्रं काव्यं च द्वे एव वाङ्मयस्य परिधौ तिष्ठतः। स्वभावोक्तिविवेचनप्रसङ्गे दण्डी लिखति यत्–

**जातिक्रिया गुणद्रव्य स्वभावख्यानमीदृशम्।**[३]
**शास्त्रेष्वस्यैव साम्राज्यं काव्येष्वप्येतदीप्सितम्।।**

अर्थात् शास्त्रेषु स्वभावस्य प्राधान्यमस्ति काव्यग्रन्थेष्वपि स्वभावो विशेषेण अभीष्टः। अत्र शास्त्राणामभिप्रायः काव्यशास्त्राणि यतो हि अत्र वर्ण्यमानविषयः काव्यशास्त्रमेव स्वभावोक्तेर्महत्वम् आचार्यो भोजोऽपि स्वीकरोति। स्वभावोक्तिरिव वक्रोक्तेरपि महत्त्वं काव्यशास्त्रेषु काव्येषु च द्वयोरपि

क्षेत्रयोः विद्यते। एवं काव्यशास्त्रे वक्रोक्तिः महत्त्वपूर्णमौलिक–सिद्धान्तरूपेणप्रतिष्ठिता तथ्यमिदं सुविदितमेव। काव्येऽपि वक्रोक्तिरुत्कर्षाधायकतत्त्वमस्ति।

दण्डीमते–**काव्यशोभाकरानधर्मान् अलङ्कारान् प्रचक्षते।**'[४] वक्रोक्तिश्च काव्यशोभायावर्द्धकं सामान्यतत्त्वमस्ति। इयं हि उक्तिवैचित्र्यरुपेण सर्वेष्वलङ्कारेषु तिष्ठति। अतः दण्डिनो वक्रोक्तिरलङ्कारसामान्यैव। सन्दर्भेऽस्मिन् दण्डिनः विचारः भामहस्य विचारेण समः। वक्रोक्तिमूलका उपमादि–अलङ्काराः काव्येऽपूर्वशोभां जनयन्ति। दण्डिना तु गुणेषु अपि अलङ्काराः स्वीकृताः। तेन अधोलिखितवाक्येन गुणानाम् आलङ्कारिता सिद्ध्यते–

**काश्चिन्मार्गविभागार्थयुक्ताः प्रागप्यलङ्क्रियाः।[५]**
**साधारणमलङ्कारजातमन्यन्निरूप्यते ।।**

अर्थात् केचिदलङ्काराः मार्गभेदस्य स्पष्टीकरणार्थं काव्यादर्शे प्रथमपरिच्छेदे वर्णिताः। इदानीं तद्भिन्नाः साधारणालङ्काराः निरुप्यन्ते। मार्गभेदस्य स्पष्टीकरणार्थं प्रतिपादिताः अलङ्काराः गुणा एव। तथ्यमिदं तरुणवाचस्पतिना स्वव्याख्यायां स्पष्टीकृतम्। **पूर्वं श्लेषादयो दशगुणा इत्युक्तम्। कथं तेऽलङ्कारा उच्यन्ते इति चेत्** शोभाकरत्वं ह्यलङ्कारलक्षणम्।' अतः श्लेषादयो गुणात्मकालङ्काराः पूर्वं मार्गप्रभेदप्रदर्शनायोक्ताः एवं आचार्यदण्डी गुणानामालङ्कारितां सिद्धयति।

**श्रृङ्गारादिरसा रसवदलङ्काराः स्वीकृताः तेन।[७]**

दण्डिना सम्पूर्ण वाङ्मयं वक्रोक्तिः स्वभावोक्तिरिति द्विधा विभज्य वक्रोक्तेर्व्यापकं क्षेत्रं प्रस्तुतम्। यद्यपि भामह इव कोऽलङ्कारोऽनया विना इत्युक्त्वा वक्रोक्तेरुच्चस्वरेण जयघोषः नैव कृतस्तेन तथापि अतिशयोक्तेः सर्वालङ्कारपरायणमस्तित्वं तु स्वीकृतमेव।

अतः दण्डिना वर्णिता अतिशयोक्तिः भामहस्य वक्रोक्तिरेव। सर्वेष्वलङ्कारेषु भामहमते वक्रोक्तेर्गुणोऽस्ति।

**तत्रैव लोकसीमावर्तिवर्तनं लोकोत्तरचमत्कारप्रकाशनं च।[८]**

दण्डिमते अतिशयोक्तेः गुणोऽस्ति। आचार्यो दण्डी स्वभावोक्तेरपि विशेष महत्त्वं स्वीकरोति तेन काव्यादर्शे नैकस्थलेषु स्वभावोक्तेश्चर्चा प्रस्तुता। दण्डिना स्वभावोक्तिः आद्यालङ्कृतिः इत्युक्त्वा सर्वेष्वलङ्कारेषु अग्रगण्यः प्रथितः। तदनुसारेण पदार्थानां भिन्नरूपेण प्रकटितस्य स्वरूपस्य साक्षात् प्रदर्शयिता अलङ्कारः स्वभावोक्तिरेव। दण्डिना वक्रोक्तिरिव स्वभावोक्तेरपि क्षेत्रं व्यापकं स्वीक्रियते।

## सन्दर्भाः

१. काव्यादर्शः २।३६२

२. काव्यादर्शः २।३६३

३. काव्यादर्शः २।१३

४. काव्यादर्शः २।१
५. काव्यादर्शः २।३
६. काव्यादर्शः २।३ वाचस्पतिटीका डॉ० डी०के० गुप्तेन सुदर्शनव्याख्यायाम् उद्धृता
७. काव्यादर्शः १।२८, ८३, ८७
८. काव्यादर्शः २।२२०

## सन्दर्भ-ग्रन्थ-सूची

१. साहित्यदर्पणः–आचार्य विश्वनाथ, सम्पादक योगेश्वरदत्त शर्मा पाराशरः, नाग पब्लिशर्स, ११ ए०यू०ए० जवाहरनगर, दिल्ली-११०००७
२. काव्यप्रकाशः–आचार्यमम्मट, सम्पादक थानेशचन्द्र उप्रैति, परिमल पब्लिकेशन्स, दिल्ली, २०३
३. वक्रोक्तिजीवितम्–कुन्तकः राधेश्याममिश्रः, चौ०प्र०, वाराणसी, १९६७
४. काव्यादर्शः–दण्डी, सम्पादक योगेश्वर शर्मा, नाग पब्लिशर्स, जवाहर नगर, दिल्ली, १९९९
५. नाट्यशास्त्रम्–भरतमुनि, सम्पादक डॉ० आर०एस० सागरः, परिमल पब्लिकेशन, दिल्ली, १९९९
६. दशरूपकम्–धनञ्जयः, सम्पादक श्रीनिवास शास्त्री, साहित्य भण्डार, सुभाष बाजार, मेरठ, १९२९
७. ध्वन्यालोकः–आनन्दवर्धनः, डॉ० नागेन्द्रः विश्वेश्वर, ज्ञानमण्डल लिमिटेड, वाराणसी, १९६२
८. रसगङ्गाधरः–पण्डितराजजगन्नाथ, सम्पादक मदनमोहन झा, चौखम्भा विद्याभवन, वाराणसी, १९०५

□□

# आचार्यकुन्तकः वक्रोक्तिसिद्धान्तश्च

–लालबहादुरः

संस्कृतकाव्यशास्त्रसमालोचकैः वक्रोक्तिशब्दस्य प्राचीनतायाः विषये सम्यक् समालोचना कृता। आचार्यभामहात् वक्रोक्तिः प्रारभते। सः अलङ्कारे समग्रमपिकाव्यवैशिष्ट्यं संगृह्णाति। तस्य मते सर्वत्र अतिशयोक्तेः प्राधान्यं वर्तते। ध्वनिवादेऽपि अतिशयोक्तिमूलक एव ध्वनिरस्ति।

कुन्तकानुसारेण वक्रोक्तौ अपि अतिशयोक्तिः अनिवार्यतः भवति यथोक्तं वक्रोक्तिकारेण–

**सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः, कोऽलङ्कारोऽनया विना।।[१]**

भामहानुसारेण वक्रोक्तिः सर्वालङ्काररूपा अस्ति। सर्वेषामलङ्काराणां मूलमेतत्। वक्रोक्तिः काव्यत्वं सम्पादयति। सैषा सर्वालङ्काररूपा। वक्रोक्तिः काव्ये समस्तसौन्दर्याधायिका। भामहाभिमतेन वक्रोक्तिरेव काव्यस्यात्मा अस्ति। वक्रोक्तेः विषये भामहकृतेयं कल्पना अलङ्कारशास्त्रिभिः स्वीकृता। वक्रोक्तिशब्दप्रयोगो वाणेन परिहासाय कृतः। एवमेव अमरुककविना अस्याः वक्रोक्तेः क्रीडालापे प्रयोगः दृश्यते।

आचार्य दण्डिना काव्यं द्विधा विभज्यते–स्वभावोक्तिः वक्रोक्तिश्च। वक्रोक्तौ श्लेषमाध्यमेन सौन्दर्याधानं भवति। यथोक्तं दण्डिना काव्यादर्शे–

**श्लेषः सर्वासु पुष्पणाति प्रायो वक्रोक्तिषु श्रियम्।[२]**
**द्विधाभिन्नं स्वभावोक्ति–र्वक्रोक्तिश्चेति वाङ्मयम्।।**

आचार्यः दण्डी काव्यशोभाकरान् धर्मान् अलङ्कारान्तगर्तं विदधाति। दण्डिना व्याख्याताः सर्वेऽपि अलङ्काराः वक्रोक्तेरन्तर्भूताः सन्ति।

भवतुनाम वक्रोक्तिः ध्वनिवादिभिः आचार्यैः मान्यता न प्रदत्ता किन्तु अस्याः वक्रोक्तेः विशिष्टाः प्रकाराः ध्वनेः अन्तर्गतं समाविश्य कुन्तकं प्रति सम्मानः प्रदर्शितः। लोचनकारेण अभिनवगुप्तमहोदयेन भामहस्य विचारान् उद्धृत्य स्पष्टतः लिखितम्–शब्दार्थयोः वक्रता लोकोत्तरत्वेन तस्य अवस्थितिरस्ति'।

कुन्तको भामहेन दण्डिना च प्रेरणां प्राप्य स्वभावोक्तावपि वक्रोक्तेः दर्शनं करोति। वक्रोक्तेः क्षेत्रवर्ण्यविषयं विस्तारयति कुन्तकानुसारं काव्यशोभाकराः सर्वेऽपि धर्माः वक्रोक्तिजन्या एव। एवं स्फुटरूपेण सिध्यति यत् कुन्तको वक्रोक्तेः महत्त्वं प्रभावं चमत्कृतिं च अलङ्कारवादिभ्य एव गृहीतवान्। वक्रोक्तिजीवितकारेण वक्रोक्तिं काव्ये सर्वोपरि स्थानं प्रदत्तम्। अस्याः विषये वक्रोक्तिजीवितस्य प्रथमे उन्मेषे तेन एवं लिखितम्।

**लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये।**[३]

अस्याः व्याख्यां कुर्वन् सः लिखति–'वैदग्ध्यं विदग्धभावः कविकर्मकौशलं तस्या विच्छितिः तथा भणितिः विचित्रैव अभिधा वक्रोक्तिः।'' कविकर्मकौशलशोभिता। विचित्रोक्तिरेव वक्रोक्तिः। वक्रोक्तिः 'काव्यस्य जीवितम्' इति मन्यमानः कुन्तकाचार्य; स्वग्रन्थस्य नाम वक्रोक्तिजीवितं चकार। वक्रा उक्ति वक्रोक्तिः। इयं सर्वसाधारणजनानां उक्तेः भिन्ना, अलौकिचमत्कारपूर्णा वचोभङ्गिमा एव। एषा वचोभङ्गिमा एव उक्तौ शोभाम् आदधाति। उक्तौ चमत्कृतेः चारुतायाश्च सम्पादनं वक्रोक्तौ एव सम्भाव्यते। अतः वक्रोक्तिः काव्यजीवितम्। वक्रोक्तिहीनं काव्यं निर्जीवमेव। उक्तिवैचित्र्यं चमत्कृतिर्वा वक्रोक्तिः। एवंविधा विशेषता काव्यप्रतिभामूलैव भवति। यत्र कस्मिंश्चित् वर्ण्यविषये तस्य कस्यचिद् धर्मस्य वा अतिशयोक्तिः विच्छित्त्या वा प्रतिपाद्यते तत्र वक्रोक्ति। कुन्तकाचार्येण वक्रोक्तेः स्वरूपं प्रतिपादयन् कथितम्–

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**[४]
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।**

काव्यलक्षणेऽपि वक्रोक्तेः अनिवार्यत्वं कुन्तकेन प्रतिपाद्यते–

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**[५]
**वन्धेव्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।**

कुन्तकः काव्यत्वं शब्दार्थोभयनिष्ठं मन्यते। न केवलं शब्दे न चाप्यर्थे। यथा प्रतितिलं तैलं तथैव शब्दार्थयोरपि काव्यत्वं प्रतितिष्ठति।

ध्वन्यालोककारः आनन्दवर्धनोऽपि वक्रोक्तिं समर्थयन् इव प्रतिभाति। तन्मतानुसारं 'काव्यस्यात्माध्वनिः'। काव्यस्य कला–भाव–पक्षयोर्ध्वनिना वक्रता सम्पाद्यते। अतिशयोक्तिः काव्यस्य सौन्दर्यं वर्धयति। सर्वेऽप्यलङ्काराः अतिशयोक्तौ वक्रोक्तौ वा समाश्रिताः सन्ति। कविप्रतिभा जन्या अतिशयोक्तिः अलङ्कारेष्वत्यधिकं सौन्दर्यं वर्धयति। अतिशयोक्त्या वक्रोक्त्या वा हीना अलङ्कारा अलङ्कारमात्रमेव। आनन्दवर्धनस्यातिशयोक्तिः भामहदण्डिनोः अतिशयोक्त्या अभिन्ना। अत एव ध्वन्यालोके तेनोच्यते–'अतिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया। कृतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्णाति। तत्रातिशयोक्तिः यम् अलङ्कारम् अधितिष्ठति कविप्रतिभावशात् तस्य चारुत्वातिशययोगोऽन्यस्य तु अलङ्कारमात्रतैवेति सा सर्वालङ्काररूपा।

अतिशयोक्तिहीनं वक्रोक्तिहीनं वा काव्यम् अवरकाव्यत्वेन गण्यते। एतस्मात् कारणात् अतिशयोक्तिः सर्वालङ्कारमूला मन्यते। आनन्दवर्धनाचार्यमतेन अतिशयोक्तेः अलङ्कारान्तरैः साङ्कर्यं वाच्यत्वेन व्यङ्ग्त्वेन च भवति। वाच्यरूपेण सा सर्वेषां अलङ्काराणां जननी। व्यङ्ग्यरुपेण च

संयुक्ता च सा ध्वनिरूपेण गुणीभूतव्यंग्यरूपेण विपरिणमते। तस्याश्चालङ्कारान्तरसङ्कीर्णत्वं कदाचित् वाच्यत्वेन कदाचिद् व्यङ्गत्वेन। अतिशयोक्तिस्तु सर्वालङ्कारविषयोऽपि सम्भवति इति वदता आनन्दवर्धनेन वक्रोक्तेरपि सर्वालङ्कारविषयत्वम् उपपाद्यते। कुन्तकसमकालीनः भोजराजोऽपि वक्रोक्तिम् उपासते। वक्रोक्तिमूलकं काव्यलक्षणम् उपपादयता तेनोक्तम्–

यद् वक्रं वचः शास्त्रे लोके च वच एवतत्।[६]
वक्रं यदर्थवादादौ तस्य काव्यमिति स्मृतिः।।

कुन्तकस्य दृष्ट्या काव्यस्य परमं रहस्यं प्राप्तुं न केवलं पाठकस्य काव्यमर्मज्ञता अनिवार्या अपितु तादृशीं लोकोत्तरसम्पत्तिं निर्मातुं कवेः वैदग्ध्यभणितिः अनिवार्या प्रतीयते। संसारस्य कश्चिदपि पदार्थः सामान्यजनस्य समानं कवेः चित्ते प्रथमतः असंस्कृतपाषाणशकलवत् प्रतिभाषितो भवति। विदग्धकवेः इदं कर्तव्यमस्ति यत् सः एतादृशं पदार्थं स्वप्रतिभाजन्यवैदग्ध्या मण्डयित्वा एवम् अलङ्क्रियेत यत् असंस्कृतपाषाणमपि शोधितमणि इव आनन्दीकरोति आचार्यकुन्तको वक्रोक्तिं षोढा बिभाजयति–

वर्णविन्यासवक्रत्वं पदपूर्वार्द्धवक्रता।[७]
वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः।।
वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।
वक्रभावः प्रकरणे प्रबन्धे वाऽस्ति यादृशः।।
उच्यते सहजाहार्य - सौकुमार्य - मनोहरः।

एते षड्भेदाः सन्ति–वर्णविन्यासवक्रता, पदपूर्वार्धवक्रता, पदपरार्धवक्रता, प्रकरणवक्रता, प्रबन्धवक्रताचेति। एतेषां षण्णामपि प्रत्येकस्य अनेके भेदाः सन्ति।

उपर्युक्तविभाजनेन ज्ञायते यत् वक्रोक्तेः विस्तारः वर्णादारम्भ प्रबन्धं यावत् द्रष्टुं शक्यते। एतदन्तर्गतमेव भाषा, प्रकृतिवर्णनम्, अलङ्कारविधानम्, रसप्रयोगः काव्यसन्देशादिकञ्च तथा सूत्ररूपेण उपलभ्यते येन परवर्तिसाहित्यसमीक्षा सरणिः प्रशस्ताभवति यथोक्तं स्वयंवक्रोक्तिकारेण–

तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।[८]
रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि।।

अयं श्लोकः वक्रोक्तिजीविते ध्वन्यालोके च प्राप्यते। आनन्दवर्धनोऽत्र अर्थान्तरसंक्रमित वाच्यध्वनिम् अङ्गीकरोति कुन्तकश्चात्र रूढवैचित्र्यवक्रतां मन्यते। क्रियावैचित्र्यवक्रतायां कुन्तको ध्वन्यालोकस्य मङ्गलाचरणस्य उपस्थापनां करोति–

**स्वेच्छा केसरिणः स्वच्छ–स्वच्छायायासितेन्दवः।**
**त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छिदो नखाः।।**

–ध्वन्यालोक १।१

कुन्तककृतवक्रतायाः क्रमशः वर्णनम् एवमस्ति–

**वर्णविन्यासवक्रता**–वर्णनां विन्यासः तस्य वक्रत्वम् प्रसिद्धप्रस्थानव्यतिरेकिणा वैचित्र्येण सन्निविष्टः काव्यमर्मज्ञानन्दकारी भवति। अस्योदाहरणम्–

**प्रथममरुणच्छायस्तावत्ततः कनकप्रभ–**[९]
**स्तदनुविरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।**
**प्रसरतिततो ध्वान्तक्षोदक्षमः क्षणदामुखे।**
**सरसविसिनी कन्दच्छेदच्छविर्मृगलाञ्छनः।।**

अस्मिन् श्लोके वर्णविन्यासवक्रतामात्रविहितः शब्दशोभातिशयः समुन्मीलितः।

**पदपूर्वार्धवक्रता**–पदस्य सुबन्तस्य तिङन्तस्य वा यत्पूर्वार्धं प्रातिपदिकलक्षणं धातुलक्षणं वा, तस्यविन्यासवैचित्र्यम्। अस्य अनेके प्रकाराः काव्येषु निबद्धाः सन्ति तेषु प्रकारेषु रूढिशब्दस्यैव प्रस्तावसमुचितत्वेन वाच्यप्रसिद्धधर्मान्तराध्यारोपण गर्भत्वेन निबन्धः पदपूर्वार्धवक्रतायाः प्रथम प्रकारो यथा–

**रामोऽस्मि सर्वं सहे।**

अत्र रामशब्दो लोकोत्तरशौर्यादिधर्मातिशयाध्यारोपपरत्वेनोपात्तो वक्रतां प्रथयति।

**प्रत्ययाश्रितवक्रता**–वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा यत्रालङ्कार–पुरुषादिवैचित्र्यविहितः यस्मिन् वचनवैचित्र्यं काव्यबन्धशोभायै निबध्यते सा प्रत्ययाश्रितवक्रता।

"मैथिलीतस्य दारा" वाक्यवक्रता–वाक्यस्य वक्रभावोऽन्यो विद्यते यः सहस्रधा। यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति' यथा–रघुवंशे–

**उपस्थितां पूर्वमपास्यलक्ष्मीम्।**[१०]

प्रकरणवक्रता वक्रभावः विन्यासवैचित्र्यं प्रबन्धैकदेशभूते प्रकरेण यादृशोऽस्ति प्रबन्धे वा नाटकादौ सोऽत्युच्यते। सः सहजाहार्यसौकुमार्यमनोहरः। अस्योदाहरणं रामायणे प्राप्यते।

**प्रबन्धवक्रता**–प्रबन्धे वक्रभावः प्रबन्धवक्रता यथाकुत्रचिन्महाकविविरचिते रामकथोपनिबन्धे नाटकादौ पञ्चविधवक्रता सामग्रीसमुदायसुन्दरं सहृदयहृदयहारिमहापुरुष–वर्णनमुपक्रमे प्रतिभासते परमार्थतस्तु विधिनिषेधात्मकधर्मोपदेशः पर्यवस्यति, रामवत् वर्तितव्यं न रावण इव।

वक्रोक्तिकारेण काव्यस्य त्रिविधाः मार्गाः वर्णिताः। ते सन्ति सुकुमारमार्गः विचित्रमार्गः मध्यममार्गश्च। एतेषां त्रयाणां मार्गाणां सोदाहरणं वर्णनं वक्रोक्तिजीवितस्य प्रथमोन्मेषेऽवाप्यते।

एवं कुन्तकेन 'वक्रोक्तिः काव्यजीवितम्' इति साधु वर्णितम्।

## सन्दर्भाः

१. काव्यालङ्कारः २।८५
२. काव्यादर्शः २।३६३
३. वक्रोक्तिजीवितम् १।२
४. वक्रोक्तिजीवितम् १।१०
५. वक्रोक्तिजीवितम् १।७
६. शृङ्गारप्रकाशः
७. वक्रोक्तिजीवितम् १।१९
८. वक्रोक्तिजीवितम् १।९
९. वक्रोक्तिजीवितम् १।१०
१०. रघुवंशम् १४।६३

## सन्दर्भ-ग्रन्थ-सूची

१. काव्यालङ्कारः–भामह विरचित, सम्पादक पं० बटुकनाथ शर्मा, ब०उ०
२. काव्यादर्शः–सम्पादक जमुना पाठक, चौखम्बा कृष्णदास अकादमी, वाराणसी
३. वक्रोक्तिजीवितम्–डॉ० दशरथ द्विवेदी, चौखम्बा सुरभारती प्रकाशन, संस्करण सन् २०११-२०१२
४. शृङ्गारप्रकाशः–भोजराज, म० म० रेवाप्रसाद द्विवेदी, 'सनातनः'
५. रघुवंशम्–म०म० रेवाप्रसाद द्विवेदी 'सनातनः', चौखम्बा सुरभारती प्रकाशन, वाराणसी

□□

# वक्रोक्तेः भेदाः

–विनयदुर्गेशः

**वक्रोक्तेः स्वरूपम्**–वक्रोक्तिशब्दस्यार्थः वक्रः उक्तिः एवमलौकिकचमत्कारयुक्तकथनं वक्रोक्तिः अस्ति। संस्कृतकाव्ये वक्रोक्तेः विशिष्टं स्थानं वर्तते। काव्याचार्येषु भामहः प्रथमं वक्रोक्तेः विवेचनं कृतम्। वक्रोक्तिः वाण्यामुत्तमभूषणं च शब्दार्थस्य अभिधाने अलङ्कारस्य अलङ्कारत्वं सिद्धं भवति। स वक्रोक्त्याः अपरः पर्यायः अतिशयोक्तिं स्वीकरोति यथा काव्यालङ्कारे–"वक्राभिधेय-शब्दोक्तिरिष्टवाचामलङ्कृतिः।"[1] दण्डी वक्रोक्तेः सीमानं न्यूनं करोति भामहनिषिद्ध-स्वभावोक्त्यां केवलमलङ्कारं स्वीकरोति। यथा–

नामावस्थानं पदार्थानां रूपं साक्षाद्विवृण्वती।
स्वभावोक्तिश्च वक्रोक्तिश्चाद्यालङ्कृतिर्यथा।।[2]

शब्दार्थस्य वक्रता लोकोत्तरकाव्यविन्यासमेव अस्ति। वस्तुतः लोचनकारः विभाव्यते इति पदस्य व्याख्यां करोति। वक्रोक्तिः अतिशयोक्त्यां विद्यते। अलङ्कारवस्तुरसादिध्वनयः वैचित्र्यपदस्यान्तर्गते समागच्छन्ति। वक्रोक्तिः कविकर्मकौशलत्वेन उत्पन्नं चमत्काराश्रितकथनम्। वक्रोक्तिः अभिधायाः सैव गुणमस्ति। यस्यां कविप्रतिभायाः चमत्कारोत्पादनं भवति। आचार्यकुन्तकः वक्रोक्तिमुच्चपदोपस्थाप्य परिभाषयति यथा––

लोकोत्तरचमत्कारकारिवैचित्र्यसिद्धये ,
काव्यस्यायमलङ्कारः कोऽप्यपूर्वो विधीयते।[3]
उभावेतावलङ्कार्यौ तयोः पुनरलङ्ऽकृतिः,
वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।[4]

अस्यां वृत्यां स्पष्टं करोति–"वैदग्ध्यं विदग्धभावः कविकर्मकौशलम् तस्य भङ्गी विच्छित्तिः तथा भणितिः विचित्रैवाभिधा वक्रोक्तिरित्युच्यते" कविकर्मकौशलत्वेन विचित्र्यैव उक्तिः वक्रोक्तिः अस्ति आचार्यकुन्तकः वक्रोक्तिं काव्यजीवितं सिद्धयति।

**वक्रोक्तेः भेदः**–प्रामुख्येन वक्रोक्तेः षड् भेदानि सन्ति (१) वर्णविन्यासवक्रता, (२) पद-पूर्वार्धवक्रता, (३) पदपरार्धवक्रता, (४) वाक्यवक्रता, (५) प्रकरण वक्रता, (६) प्रबन्ध वक्रता।

**(१) वर्णविन्यास वक्रता**–या वक्रता वर्णानामक्षराणां विशिष्टन्यासेन भवति सा वर्णविन्यास वक्रता अस्ति। तस्या वक्रतायाः प्रसिद्धप्रस्थानेन भिन्नं वैचित्र्योपनिबद्धवक्रभावः किंवा वर्णरचनाविशेषेण उत्पन्नं भूत्वा काव्यतत्त्वज्ञानामाह्लादमुत्पादयति आचार्यकुन्तकस्यमते यथा–

"वर्णानां विन्यासो वर्णविन्यासः अक्षराणां विशिष्टन्यसनं तस्य वक्रत्वं वक्रभावः प्रसिद्धप्रस्थान व्यतिरेकिणा वैचित्र्येणोपनिबद्धः सन्निवेसविशेषविहितस्तद्विदाह्लादकारि शब्दशोभातिशयः।"

दृष्टान्तः–

**प्रथममरुणच्छायस्तावत्ततः कनकप्रभ-**
**स्तदनु विरहोत्ताम्यत्तन्वीकपोलतलद्युतिः।**
**प्रसरति ततो ध्वान्तक्षोदक्षमः क्षणदामुखे,**
**सरसबिसिनीकन्दच्छेदच्छविर्मृगलाच्छनः।।**[५]

अत्र वर्णविन्यासेन समुत्पन्नः शब्दशोभातिशयः निरन्तरं समुन्मीलयति इयं वक्रता चिरन्तनेषु मतेषु अनुप्रासस्य नाम्ना प्रख्यातमासीत्।

**( २ ) पदपूर्वार्ध वक्रताः**–पदपूर्वार्धवक्रता सुबन्त-तिङ्न्तपदे भवति या प्रातिपदिक किंवा धातुरूपस्य विशिष्टरचनावैशिष्ट्यमस्ति। अस्या तात्पर्यं रुढिः पर्यायः उपचारः विशेषेणं सुवृत्तिः लिङ्गं पदपूर्वार्धवक्रतानामनैकानि भेदानि सन्ति। आचार्यकुन्तकस्यमते यथा–

"पदस्य सुबन्तस्य तिङ्न्तस्य वा यत्पूर्वार्ध प्रातिपदिकलक्षणं वा तस्य वक्रता वक्रभावो विन्यासवैचित्र्यम् तत्र च बहवः प्रकाराः सम्भवन्ति।"

**दृष्टान्तः**–रामोऽस्मि सर्व सहे[६] अत्र राम शब्देन दृढं कठोरहृदयः पदपूर्वार्धभागे वक्रता अस्ति।

**( ३ ) प्रत्ययाश्रितवक्रता**–वक्रतायाः प्रत्ययाश्रिते अवान्तरभेदः प्रत्याश्रितवक्रतारूपे ज्ञातव्यः सा वक्रता द्विविधा भवति प्रथमा संख्यावैचित्र्येणोत्पन्नम्–मैथिली तस्य दाराः।[७] द्वितीयो कारकवैचित्र्ये यथा–

**स्तनद्वन्द्वं मन्दं स्नपयति बालादवाष्पनिवहो**

× × × ×

**जानीमस्तस्याः क इव हि विकारव्यतिकरः।**[८]

**( ४ ) वाक्यवक्रता**–पदसमुदायभूते वाक्यस्य वक्रता पदादयः वक्रताभिः भिन्नः सहस्रभेदैः युक्तं भवति। यस्यामर्न्तगते अलङ्काराणां समुदायवर्गमर्न्तभूतं भवति। आचार्यकुन्तकस्य मते यथा–

**वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।**
**यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।।**

दृष्टान्तः–

उपस्थितां पूर्वमपास्य लक्ष्मीं वनं मया सार्धमसि प्रपन्नः।
त्वामाश्रयं प्राप्य तथानु कोपात्सोढाऽस्मि न त्वद्भवने वसन्ती।।[९]

**(५) प्रकरणवक्रता**–प्रबन्धस्यैकदेशभूतं प्रकरणे यः वक्रभावः स्वाभाविक-सहजाहार्यसुकुमारेण हृदयावर्जकं भवति। सा प्रकरणवक्रता इति नाम्ना अभिधीयते यथा आचार्यकुन्तकस्य मते–

वक्रभावः प्रकरणे प्रबन्धे वास्ति यादृशः।
उच्यते सहजाहार्यसौकुमार्यमनोहरः।।[१०]

दृष्टान्तः–

प्रयुज्य सामाचरितं विलोभनं भयं विभेदाय धियः प्रदर्शितम्।
तथाभियुक्तं च शिलीमुखार्थिना यथेतरन्याय्यमिवावभासते।।[११]

**(६) प्रबन्धवक्रता**–समस्तश्रव्यदृश्यकाव्यग्रन्थस्य वैशिष्ट्यमुत्पादनं कवेः प्रधानोद्देश्यं भवति। प्रबन्धे वक्रभावं प्रबन्धवक्रता अस्ति प्रबन्धस्यार्थः आचार्यकुन्तकस्य मते–

वाच्यवाचकसौभाग्यलावण्यपरिपोषकः ।
व्यापारशाली वाक्यस्य विन्यासो वन्ध उच्यते।।[१२]

शब्दार्थस्य सौभाग्यलावण्यपरिपोषकः कवेः काव्यक्रियाव्यापारेण युक्तं वाक्यस्य विन्यासः बन्ध उच्यते।

दृष्टान्तः–

दत्त्वां बामकरं नितम्बफलके लीलाबलन्मध्यया,
× × × ×
सासूयं प्रहिताः स्मरज्वरमुचो द्वित्राः कटाक्षच्छटाः।।[१३]

उपर्युक्त विवेचनेन स्पष्टं भवति यत् संस्कृतसाहित्ये वक्रोक्तेः विशिष्टं स्थानं वर्तते।

## सन्दर्भाः

१. काव्यालङ्कारः १।३६
२. काव्यादर्शः २।८
३. वक्रोक्तिजीवितम् १।२

४. वक्रोक्तिजीवितम् १।१०

५. वक्रोक्तिजीवितम् १।४१

६. वक्रोक्तिजीवितम् १।४२

७. वक्रोक्तिजीवितम् १।५६

८. वक्रोक्तिजीवितम् १।६५

९. वक्रोक्तिजीवितम् १।७०

१०. वक्रोक्तिजीवितम् १।२१

११. वक्रोक्तिजीवितम्, १।७१

१२. वक्रोक्तिजीवितम् १।२२

१३. वक्रोक्तिजीवितम् १।७२

## सन्दर्भ-ग्रन्थ-सूची

१. काव्यालङ्कार–सम्पादक पं० बटुकनाथ शर्मा तथा पण्डित बलदेव उपाध्याय, चौखम्भा संस्कृत संस्थान, वाराणसी, संस्करण वि०सं० २०३८

२. काव्यादर्श–सम्पादक डॉ० जमुना पाठक, चौखम्भा कृष्णदास एकेडमी, वाराणसी, संस्करण २००५ ई०

३. वक्रोक्तिजीवितम्–सम्पादक डॉ० दशरथ द्विवेदी, विश्वविद्यालय प्रकाशन, चौक, वाराणसी, संस्करण २००२ ई०

□□

# वक्रोक्तिसम्प्रदायस्य प्रतिष्ठापकाचार्यकुन्तकविषये मम्मटस्य विचारः

–धर्मेन्द्रकुमारः

शास्त्रीयग्रन्थेषु वक्रोक्तिसम्प्रदायस्य महत्त्वपूर्णं स्थानम् अस्ति। 'मन्दः कवियशः प्रार्थी' इयं हि परम्परा आसीत् पुरा कवीनाम्। वाल्मीकिव्यासकालीदासादीनामिव आचार्यकुन्तकस्यापि व्यक्तित्वम् अज्ञानाच्छन्नमेव। तस्य देशकालादिविषये कोऽपि सङ्केतः न प्राप्यते। केवलं हि केषाञ्चित् पूर्ववर्तिकवीनां काव्यशास्त्रीयाचार्याणां नामोल्लेखो विद्यते 'वक्रोक्तिजीवितम्' इति ग्रन्थे। तैरेव कुन्तकस्य व्यक्तित्वे आलोकः प्रदीयते–

जगत्त्रितय वैचित्र्यचित्रकर्म विधायिनम्।
शिवं शक्तिपरिस्पन्दमात्रोपकरणं नुमः।।[1]

अनेन मङ्गलाचरेणेन अनुमीयते यत् शैवसम्प्रदाये कुन्तकस्य अप्रतिमनिष्ठा आसीत् 'स्पन्द' शब्दस्य प्रयोगेण ज्ञायते यत् च प्रत्यभिज्ञादर्शनस्यानुगामी आसीत्। स्पन्दशब्दयोऽयं काव्यस्वरूपत्वेन प्रयोजनत्वेन स्वभावोक्त्यलङ्कारातिशयोक्त्यालङ्कारत्वेन काव्यस्य च धर्मत्वेन भासते। आनन्दवधर्नस्य राजशेखरस्य चोद्धरणं तस्य पूर्वतनसीमानं विनिश्चयति। आचार्यकुन्तकेन स्वग्रन्थे ध्वन्यालोकस्य कारिका उद्धृता वर्तते यत्–

ननु कश्चित् प्रतीयमानं वस्तु ललनालावण्यसाम्यलावण्यमिति उपपादितमिति–

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।[2]

इत्यादि उदाहृतस्तेन सुस्पष्टं यत् आचार्यकुन्तकः ध्वन्यालोकस्य कारिकांशेन वृत्यंशेनापि पूर्वपरिचतासीत्। अतः संशयस्यावसरो नास्ति यत् स आनन्दवधर्नस्य परवर्ती आसीत्। राजशेखरविरचितविद्धशालभञ्जिकातोऽपि उदाहरणानि प्रस्तुतानि तेन प्रकरणवक्रताया उदाहरणं बालरामायणे प्रदत्तम्–

कर्पूर इव दग्धोऽपि शक्तिमान् यो जने जने।
नमः शृङ्गारबीजाय तस्मै कुसुमधन्विने।।[3]

ततोऽपि अधिकं राजशेखरस्य नामनिर्देशः विचित्रमार्गानुयायिकवित्वेन कृतः–तथैव च विचित्र वक्रत्वविजृम्भितं हर्षचरिते प्राचुर्येण भट्टबाणस्य विभाव्यते। भवभूतिराजशेखरविरचितेषु बन्धसौन्दर्यसुभगेषु मुक्तकेषु परिदृश्यते।[4] आचार्यकुन्तकः अभिनवगुप्तस्य पूर्ववर्ती नासीदिति सम्मतौ

डॉ० शङ्करन्, डॉ० डे, डॉ० राधवन्, भारतरत्नश्च म०म० काणे इत्येतेषां विदुषां नामानि दृष्टिपथं समागच्छन्ति।

आचार्य मम्मटमते वक्रोक्तिः सिद्धान्तश्च–ध्वनिवादिभिराचार्यैः कारणं विनैव कुन्तकस्य वक्रोक्तिसिद्धान्तः उपेक्षितः। तत्र आचार्यमम्मटः सर्वप्रमुखः। कुन्तकस्य प्रभावः तस्मिन् सुस्पष्टं आसीत् किन्तु तस्य महानता परिदृश्यते यत् तेन कुन्तकस्य न तु नामोल्लेखो न च तस्य सिद्धान्तपरिचय एव प्रकृटीकृतः मम्मटस्य लोकोत्तरवर्णितकविकर्मरूपं काव्यं कुन्तकस्य वक्रोक्तिकविव्यापाररूप-काव्यस्यानुवादमात्रं मम्मटस्य काव्यप्रयोजनेषु 'व्यवहारविदे' इत्युद्भावस्य प्रेरणा निश्चयेनैव कुन्तकस्य प्रयोजनादेव सम्प्राप्तं[५] काव्यामृतानन्दस्य सकलप्रयोजनमौलिभूतम्। इति विशेषणामिधानं दृढतया कुन्तकेनैव प्रयुक्तम्। यस्यानुकरणमाचार्यमम्मटेन कृतं नूनमेव[६] डॉ० डे महोदयेन वक्रोक्तिजीवितस्य भूमिकायां प्रतिपादितं यत्–कुन्तकस्य परवर्तिभिराचार्यैः तस्य वक्रोक्तिसिद्धान्तः अस्वीकृतः किन्तु अलङ्कारस्वरूपविश्लेषणं तु निश्चयेन स्वीकृतम्। कुन्तकस्य मतानुसारेण अलङ्कारे वैचित्र्यस्याथवा विच्छित्तेस्तथा कविप्रतिभाया निवर्तित्वं परमावश्यकमस्ति। एतयोर्द्वयोः अभावे कोऽपि अलङ्कारत्वं नैव प्राप्नोति। कवेः कौशलं रसस्य वस्तुभावस्य च वर्णने न तथा अभिव्यक्तं भवति यथा अलङ्काराणां सम्यग् निरूपणे। यथा हि कविकौशलं विना तत्र वैचित्र्यं सम्भवति नैव शब्दश्लेषस्य शब्दालङ्कारतां निरूपयन् आचार्यो मम्मटः सुस्पष्टशब्देषु कस्यापि अलङ्कारत्त्वाय वैचित्र्यस्य सद्भावं तथा च कविप्रतिभासंरभ्भगोचरत्वं प्रतिपादयति–

कि वैचित्र्यम्? अलङ्कार[७] हेतोरलङ्कारतां खण्डयन् स वदति यत् हेतुमता सह हेतोरभिधानम् अभेदतो हेतु इति हेत्त्वलङ्कारो न लक्षितः आयुर्घृतम् इत्यादिरूपो ह्येष न भूषणताम्[८] तदतिरिक्तमपि रूद्रटस्य 'भगतरुणि' इति–युग्मके अनुप्रासस्य विफलतां निरूपयन् स स्पष्टतः कुन्तकस्य अनुवादमात्रं प्रस्तौति–अत्र वाच्यस्य विचिन्त्य[९] मानं न किञ्चिदपि चारूत्वं प्रतीयते इत्यपुष्टार्थतैवानुप्रासस्य एवं स्पष्टं परिलक्ष्यते यत् आचार्यमम्मटे कुन्तकस्य पर्याप्तप्रभावो विद्यते। तदाधारेण च ध्वनिसिद्धान्तस्य पर्याप्तमेव परिमार्जनं कृतं तेन एतादृश्यां परिस्थितौ कुन्तकस्य तद्वक्रतानां चानुल्लेखः मम्मटस्य कृतेऽशोभनीय एवोच्यते। अभिनवगुप्तस्य नाम अगृहीत्वापि 'अन्यैरपि सुबादिवक्रता' इत्युक्त्वा कुन्तकस्य सिद्धान्तं प्रकाशयति। परन्तु आचार्यमम्मटेन तादृशोनैव सम्पादितः सिद्धान्तः।

अस्तु मम्मटस्तु कुन्तकप्रतिपादितस्य वक्रोक्तिसिद्धान्तस्य वक्रताया वा सिद्धान्तं नैव स्वीकरोति किन्तु भामहेन वक्रोक्तिः स्वीकृता यतो हि कार्यमिदं तस्य आद्याचार्येण आनन्दवर्धनेन पूर्वमेव सम्पादितम् आसीत्। भामहस्तु वक्रोक्तेमर्हत्तां समग्रकाव्यस्य कृते परमावश्यकीमवदत्। तदैव परिवर्तिभिराचार्यैः तस्याः परिधिरूपमां यावदेव प्रसारिता। भामहस्यालङ्कारो, यस्यालङ्कारता वक्रोक्तेरभावे निषिद्धा जायते–सोऽलङ्कारः आनन्दवर्धनमम्मटादीनामपेक्षया सुष्ठुपराऽस्ति। विशेषा-लङ्कारस्य निरूपणानन्तरं मम्मटो वदति यत् सर्वत्र एवं विविधविषयेऽतिशयोक्तिरेव प्राणत्वेनतिष्ठते। अत एव उक्तं सैवा सर्वत्र वक्रोक्तिः इत्यादयः। इति शुभम्।

## सन्दर्भाः

१. वक्रोक्तिजीवितम् १।१

२. ध्वन्यालोकः १।४

३. वा०रा०, पञ्चमं

४. व०जी०, पृ० ११५

५. व०जी० १।४

६. व०जी० १।५

७. का०प्र० ४२९

८. का०प्र० ५४७

९. का०प्र० ५९०

१०. व०जी० ७८

## सन्दर्भग्रन्थ-सूची

१. वक्रोक्तिजीवितम्–कुन्तकः, राधेश्याममिश्रः, चौखम्भा प्रकाशन, वाराणसी, १९६७

२. ध्वन्यालोक–आनन्दवर्धनः, डॉ० नागेन्द्र, विश्वेश्वरः, ज्ञानमण्डल लिमिटेड, वाराणसी, १९६२

३. वाल्मीकिरामायण–चतुर्वेदी द्वारकाप्रसाद शर्मा, रामनारायण लाल प्रकाशक, इलाहाबाद, द्वितीय संस्करण, १९५०

४. वक्रोक्तिजीवितम्–राधेश्याममिश्रः, चौखम्भा प्रकाशन, वाराणसी, १९६७

६. वक्रोक्तिजीवितम्–राधेश्याममिश्रः, चौखम्भा प्रकाशन, वाराणसी, १९६७

७. काव्यप्रकाश–थानेश्वरचन्द्र उप्रैति, परिमल पब्लिकेशन्स, दिल्ली, २००३

८. काव्यप्रकाश–थानेश्वरचन्द्र उप्रैति, परिमल पब्लिकेशन्स, दिल्ली, २००३

९. काव्यप्रकाश–थानेश्वरचन्द्र उप्रैति, परिमल पब्लिकेशन्स, दिल्ली, २००३

१०. वक्रोक्तिजीवितम्–राधेश्याममिश्रः, चौखम्भा प्रकाशन, वाराणसी, १९६७

□□

# आचार्यकुन्तकः वक्रोक्तिसिद्धान्तश्च

–डॉ० सुरेश पाण्डेयः

सर्वे जानन्त्येव यत् कुन्तकाचार्यस्य अभ्युदयात्पूर्वमेव संस्कृतसाहित्यशास्त्रस्य श्रीवृद्धौ रसालङ्कार–गुणादीनाम् महद्योगदानम् आसीत्। ध्वनिसम्प्रदायश्च प्रतिष्ठितः आसीत्। चिन्तनशीलः श्रीमद्राजानक–कुन्तकाचार्यः अलङ्कारशास्त्रे चमत्कृतिसम्वर्धनाय वक्रोक्तिसमुद्भावयामास। वक्रोक्तिः काव्यजीवितम्' इत्येतस्य तात्पर्यमस्तिकिमप्यपूर्वलावण्ययुक्तं लोकोत्तरचमत्कारजनकं कथनम् इति। कारणं चात्र सुस्पष्टमस्ति यत् नानाविधाः उक्तयस्तुसामान्य–व्यवहारेऽपि प्रयुज्यन्ते, परञ्च तत्र रसचर्वणायाउन्मीलनं न दृश्यते। इदन्तु कवेः काव्यस्य वा लोकोत्तरं वर्णनमस्ति यत् सामाजिकेषु रसचर्वणायाः उन्मेषं करोति। अत्र 'वक्रोक्ति' शब्दे पदद्वयम् वर्तते–वक्रा+उक्तिश्च। वक्रस्य शाब्दिकोऽर्थः कटिलः वक्रभावापन्नः विलक्षणो वाऽस्ति। उक्तिस्तु कविकथनपर्यायः। अत एव ग्रन्थकारेण कुन्तकेन एतस्य व्याख्यायां 'वैदग्ध्य–भङ्गीभणिति' इतिपदस्य प्रयोगः कृतः।

वक्रतायाः सर्वरूपव्यवहारप्रसङ्गे आचार्येण कुन्तकेनात्र विविधायामैः लाक्षणिकप्रसङ्गैः निरूपितम्। तद्व्याख्यानञ्च मुख्यतत्वेन यथा–शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्धव्यतिरेकि, प्रसिद्धप्रस्थानव्यतिरेकि, अतिक्रान्तव्यवहारसरणिश्चेति। अत्र आसाम् अयमाशयः यत् शास्त्रप्रतिपादितानां व्यवहारेप्रयुक्तानाञ्च भावानाम् अभिव्यक्तिरूपाय मनुष्यः यस्य कस्यापि सुगमस्य मार्गस्य आश्रयणं करोति, तमतिक्रम्य प्रतिभा–प्रभामण्डितोऽयं कविः पद–पदार्थयोः दिग्दर्शनैवैलक्षण्यम् उत्पादयति। प्रस्तुतेऽत्र विषये आचार्येण कुन्तकेन महाकवेः कालिदासस्य खण्डकाव्यस्य मेघदूतस्य एकम् उत्कृष्टम् उदाहरणम् व्यावहारिकपक्षोपस्थापनाय स्थापितम् तद्यथा–

**भर्तुर्मित्रं प्रियमविधवे विद्धि मामम्बुवाहं,**
**तत्संदेशैर्हृदयनिहिततैरागतं त्वत्समीपम्।**
**यो वृन्दानि त्वरयति पथि श्राम्यतां प्रोषितानां,**
**मन्द्रस्निग्धैर्ध्वनिभिरबलावेणिमोक्षोत्सुकानि।।**[१]

अत्र 'अविधवे' इत्यादिप्रतिपदं स हृदयावर्जकञ्चेति। इत्थं समासेन वक्रोक्तेः प्राणभूता–समीक्षासाहित्यसाररसिकानां पुरतः विलसतिः।

**काव्यकाञ्चनकषाश्ममानिना,**
**कुन्तकेन निजकाव्यलक्ष्मणि ।**
**यस्य सर्वनिरवद्यतोदिता,**
**श्लोक एष स निदर्शितो मया।।२९।।**[२]

इति उक्त्वा कुन्तकस्य वक्रोक्तिसिद्धान्तस्य पर्याप्तं खण्डनं कृतम्। महिमभट्टस्य कालः एकादशशतखीष्टाब्दस्य अन्तिमोभागः अस्ति। अत एव कुन्तकस्य कालः खीष्टाब्दस्य दशमशतकस्य अन्ते एकादशशतकस्य प्रारम्भे वा स्वीकरणम् समुचितं प्रतिभाति। कुन्तकेन अभिनवगुप्तस्य निर्देशः क्वापि न कृतः, न च अभिनवगुप्तेन कुन्तकस्य च। परञ्चलोचनेन अभिनवभारत्या च प्रतीयते यत् 'अभिनवगुप्तः' कुन्तकस्य वक्रोक्तेः विविधायामैः सुपरिचितः आसीत्। अतः अनुमीयते यत् 'कुन्तकाचार्यः' अभिनवगुप्तस्य समसामयिकोप्यवस्थायां तस्माज्जयेष्ठः एव प्रतीयते। सम्प्रतिकुन्तकाचार्यस्य एकैवरचना 'वक्रोक्तिजीवितम्' समुपलभ्यते। तत्र चत्वारोऽध्यायाः उन्मेषाः वा सन्ति। ग्रन्थेऽस्मिन् त्रयोभागाः सन्तिः, कारिका, वृत्ति, उदाहरणञ्च। तत्र कारिकावृत्तिश्चेति कुन्तकस्य स्वीया रचनाऽस्ति। उदाहरणानि संस्कृतसाहित्यस्य प्रसिद्धग्रन्थेभ्यः गृहीतानि सन्ति।

## कुन्तकाभिमतम् काव्यस्वरूपं लक्षणं

**शब्दार्थौसहितवक्रकविव्यापारशालिनि।**
**वन्धे व्यवस्थितौ काव्यम् तद्विदाह्लादकारिणि।।**[3]

शब्दार्थौ काव्यं वाचकोवाच्यश्चेति द्वौ सम्मिलितौ काव्यम्। द्वावेकमितिविचित्रैवोक्तिः। तेन यत्केषांचिन्मतं कवि–कौशलकल्पित–कमनीयातिशयः शब्द एव केवलं काव्यमिति। केषांचिद् वाच्यमेवरचनावैचित्र्यचमत्कारकारिकाव्यमिति, पक्षद्वयमपि निरस्तं भवति।

अपि च शोभातिशयशून्यं न काव्यव्यपदेशमर्हति। यथा–

**प्रकाशस्वाभाव्यं विदधति न भावास्तमसि यत्।**
**तथा नैते तेस्युर्यदि किल तथा तत्र न कथम्।।**
**गुणाध्यासाभ्यासव्यसनदृढदीक्षागुरुगुणो ।**
**रविव्यापारोऽयं किमथ सदृशं तस्य महसः।।**[4]

अत्र शुष्कतर्कवाक्यवासनाधिवासितचेतसा प्रतिभाप्रतिभासमात्रमेव वस्तुव्यसनितया कविना केवलमुपनिबद्धम्। न पुनर्वाचकवक्रताविच्छित्तिलवोऽपि लक्ष्यते। यस्मात् तर्कवाक्य–शय्यैव शरीरमस्य श्लोकस्य। एतयोरन्तरं सहृदयसंवेद्यमिति तैरेव विचारणीयम्। तस्मात् स्थितमेतत् न शब्दस्यैव रमणीयता विशिष्टस्य केवलस्य काव्यत्वम्, नाप्यर्थस्येति तदिदमुक्तम्–

**रूपकादिरलङ्कारस्तथान्यैर्बहुधोदितः ।**
**न कान्तमपिनिर्भूषं विभाति वनिताननम्।।१५।।**
**रूपकादिमलङ्कारं बाह्यमाचक्षते परे।**
**सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्।।१६।।**[5]

तेन शब्दार्थौ द्वौ सम्मिलितौ काव्यमितिस्थितिम्। यथा–

लीलया इव कुवलयं कुवलयमिव शीर्षे समुद्वहता।
शेषेण शेषपुरुषाणां पुरुषकारः समुद्वसितः।।२०।।[६]

अत्र अप्रस्तुतप्रशंसोपमालक्षणवाच्यालङ्कारवैचित्र्यविहितहेलामात्रविरचितासुभगा कापि काव्यच्छायासहृदयहृदयमाह्लादयति। यद्यपि सर्वेषाम् उदाहरणानाम् अविकलकाव्यलक्षणपरिसमाप्तिः सम्भवति तथापि यत्प्राधान्येन अभिधीयते स एवांशः प्रत्येकम् तेषां परिस्फुरति। सहृदयैः स्वयमेवोत्प्रेक्षणीयम् इति।

**कुन्तकसम्मतम् विचित्रमार्गः**

यदप्यनूतनोल्लेखं वस्तु यत्र तदप्यलम्।
उक्तिवैचित्र्यमात्रेण काष्ठां कामपि नीयते।।
यत्रान्यथाऽभवत् सर्वमन्यथैव यथारुचि।
भाव्यते प्रतिभोल्लेखमहत्त्वेन महाकवेः।।
प्रतीयमानता यत्र वाक्यार्थस्य निबध्यते।
वाच्यवाचकवृत्तिभ्यां व्यतिरिक्तस्य कस्यचित्।।[७]

अर्थात्, यत्र केनापि अलौकिकेन कमनीय–वैचित्र्येण वर्धितानां भावानां सरलातिशयाभिप्राययुक्तः स्वभावः वर्ण्यते तत्र विचित्रमार्गो भवति।

सोऽतिदुःसञ्चरो येन विदग्धकवयोमताः।
खड्गधारापथेनेव सुभटानां मनोरथाः।।[८]

अर्थात्, स विचित्राभिधानः पथः अतिदुःसञ्चरणीयः दुःखपूर्णश्चास्ति। किंबहुना, येन विदग्धकवयः केचिदेवव्युत्पन्ना। केवलं गतप्रयाताः, तदाश्रयेणकाव्यानि चक्रुरित्यर्थः। कथं खड्गधारापथेनेव सुभटानां मनोरथाः सङ्कल्पविशेषाः। तदयमत्र परमार्थः, यत् कविप्रयत्ननिरपेक्षयोरेव शब्दार्थयोः स्वाभाविकः कोऽपिवक्रताप्रकारः परिस्फुरन् परिदृश्यते। यथा–

कोऽयं भातिप्रकारस्तव पवनपदं लोकपादाहतीनाम्,
तेजस्विव्रातसेव्ये नभसि नयसि यत्पांसुपूरं प्रतिष्ठाम्।
यस्मिन्नुत्थाप्यमाने जननयनपथोपद्रवस्तावदास्ताम्,
केनोपायेन सह्यो वपुषि कलुषतादोष एष त्वयैव।।[९]

अत्र अप्रस्तुतप्रशंसालक्षणालङ्कारः प्राधान्येनवाक्यार्थः। प्रतीयमान–पदार्थान्तरत्वेन प्रयुक्तत्वातत्र विचित्रकविशक्ति–समुल्लिखितवक्रशब्दार्थोपनिबन्धमाहात्म्यात् प्रतीयमानमप्यभिधेयतामिव प्रापितम्।

## काव्यप्रयोजननिरूपणम्

**धर्मादिसाधनोपायः सुकुमारक्रमोदितः।**
**काव्यबन्धोऽभिजातानां हृदयाह्लादकारकः।।**[१०]

हृदयाह्लादकारकश्चित्तानन्दजनकः काव्यबन्धः सर्ग–बन्धादिर्भवतीतिसम्बन्धः। तत्र अभिजाताः खलुराजपुत्रादयो धर्माद्युपेयार्थिनो विजिगीषवः क्लेशभीरवश्च, सुकुमाराशयत्वात्तेषाम् तथासत्यपि तदाह्लादकत्वे काव्यबन्धस्य क्रीडनकादिप्रख्यताप्राप्नोतिइत्याह–धर्मादिसाधनोपायः।

सुकुमारः सुन्दरः सहृदयहृदयहारीक्रमः परिपाटीविन्यासः तेनोदितः कथितः सन्। अभिजातानाम् आह्लादकत्वे सतिप्रवर्तकत्वात् काव्यबन्धो धर्मादिप्राप्त्युपायताम् प्रतिपद्यते।

**चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।**
**काव्यामृतरसेनान्तश्चमत्कारो वितन्यते।।**[११]

योऽसौ चतुर्वर्गफलास्वादः प्रकृष्टपुरुषार्थयासर्वशास्त्रप्रयोजनत्वेनप्रसिद्ध सोऽप्यस्य काव्यामृतचर्वणचमत्कार–कलामात्रस्य न कामपि साम्यकलनां कर्तुमर्हतीति।

अपि च काव्यप्रयोजनस्य फलश्रुतिर्यथा–

**कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम्।**
**आह्लाद्यामृतवत्काव्यमविवेकगदापहम् ।।**[१२]

कुन्तकसम्मतस्य सुकुमारमार्गस्य स्वरूपं–

**भावस्वभावप्राधान्यन्यक्कृताहार्यकौशलः।**
**रसादिपरमार्थज्ञमनः संवादसुन्दरः।।**[१३]

अर्थात् सहृदयकवेः अम्लानप्रतिभया, समुत्पन्नेन नूतनेन शब्देन अर्थेन च प्रयत्नेन विनैव कतिपय रमणीयालङ्कारैः सहितस्य सुकुमारमार्ग; सम्भवति।

**यत् किञ्चनापिवैचित्र्यं तत्सर्वप्रतिभोद्भवम्।**
**सौकुमार्यपरिस्पन्दस्यन्दि यत्र विराजते।।**[१४]

अर्थात् अनुभवगम्येन अव्यक्तस्थितिसौन्दर्येणसहृदय–जनान् आह्लादयितावधितुश्च–कौशलेन निष्पन्नाया; सृष्टि–रचनायाःअविशयसौन्दर्यम् इव रमणीयस्य काव्य सुकुमारमार्गो भवति।

**सुकुमारभिधः सोऽयं येन सत्कवयोगता।**
**मार्गेणोत्फुल्लकुसुमकाननेनेव षटपदाः।।**[१५]

अर्थात्, यथाविकसितात् कुसुमकाननात् द्विरेफाः निःसरन्ति, तथैव येतोत्तम–मार्गोणमहाकवय कालिदासप्रभृतयः सत्कवयः निर्गताः स एव सत्काव्यस्य सुकुमारमार्गः।

## सन्दर्भाः

१. मेघदूतम्, उत्तरमेघः ३६
२. व्यक्तिविवेकः, द्वितीयो विमर्शः
३. वक्रोक्तिजीवितम् १।७, पृ० ७९
४. वक्रोक्तिजीवितम्, पृ० ८५
५. वक्रोक्तिजीवितम्, पृ० ९२
६. वक्रोक्तिजीवितम्, पृ० ९६
७. वक्रोक्तिजीवितम् १।३८-४०, प्रथमोन्मेषः, पृष्ठ १३५
८. वक्रोक्तिजीवितम् १।४१-४३, प्रथमोन्मेष, पृ० १३६
९. वक्रोक्तिजीवितम् ८९, प्रथमोन्मेष, पृ० २०४
१०. वक्रोक्तिजीवितम् १।३, प्रथमोन्मेष, पृ० ७
११. वक्रोक्तिजीवितम् १।५, प्रथमोन्मेष, पृ० ११
१२. वक्रोक्तिजीवितम् १।२६, प्रथमोन्मेष, पृ० १३२
१३. वक्रोक्तिजीवितम् १।५, प्रथमोन्मेष, पृ० १७९
१४. वक्रोक्तिजीवितम् १।२८, पृ० १७९
१५. वक्रोक्तिजीवितम् १।२९, पृ० १७९

## सन्दर्भ-ग्रन्थ-सूची

१. "मेघदूतम्", परिमल पब्लिकेशन, दिल्ली-७, संस्करण २०१४
२. "व्यक्तिविवेक" द्वितीयोविमर्शः, चौखम्बा संस्कृत सीरीज, वाराणसी, १९६४
३. "वक्रोक्तिजीवितम्" प्रथम उन्मेष, शिवालिक प्रकाशन, २७/१६, शक्तिनगर, दिल्ली-०७, प्रथम संस्करण, २०१६

□□

# वक्रोक्तिसिद्धान्तस्य उद्भवो विकासश्च

–बबली पाण्डेयः

वक्रोक्तिसम्प्रदायस्य मूलस्रोतो वेद एवास्ति। अथर्ववेदे वक्रशब्दस्य प्रयोगः कुटिलार्थे विलोक्यते। महाकविकालिदासेनापि मेघदूते–'वक्रः पन्था यदपि भवतः प्रस्थितस्योत्तरराशाम्'[१] इति पद्ये वक्रशब्दस्य प्रयोगः कुटिलार्थे कृतो विद्यते। एवं वक्रा+उक्तिः वक्रोक्तिरिति। बाणभट्टेन वाक्छलक्रीडालाप–परिहासजल्पिताद्यर्थे चापि वक्रोक्तेः प्रयोगः कृतः। एतदतिरिक्तमपि चमत्कारपूर्णकथनप्रकारे वचनविदग्धताद्यर्थे चापि बाणभट्टस्य वक्रोक्तिप्रयोगो दृश्यते। अमरुककविनापि सुन्दरोक्त्यर्थे वक्रोक्तिशब्दः प्रयुक्तः।

वक्रोक्तेः काव्यशास्त्रीयः प्रयोगः सर्वप्रथमं भामहस्य काव्यालङ्कारे लोचनपथमायाति शब्दार्थवक्रताभूषिता वक्रोक्ति खलु अलङ्काराणां जननी। इयमेव वक्रोक्तिर्भामहेन अतिशयोक्ति–नाम्नोल्लिखितास्ति। यस्या उल्लेखो हि अभिवनगुप्तपादस्य लोचनटीकायामुपलभ्यते–

'अथ सा काव्यजीवितत्वेन तु उक्ता। लोकसाधारणकथनमतिक्रम्योक्तिरेव अतिशयोक्तिरित्युच्यतो। तत्र लोकातिक्रान्तह्लादगोचरतामयी रमणीयता विराजते इयमतिशयोक्तिरेव वक्रोक्तिः कथ्यते। सहैव सकलालङ्काराणां जीवितम्–

सैषा सर्वैव वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।[१]

एतदर्थमेव कतिभिर्यतनीयं यतः वक्रोक्त्यभावेऽलङ्कारतैव न सिद्ध्यति। अस्मादेव भामहेन हेतुसूक्ष्मलेशनामानोऽलङ्काराः खण्डिताः। वक्रोक्तिं विना तु काव्यं वार्तामात्रमेव शिष्यते।

दण्डिमते सम्पूर्णं संस्कृतवाङ्मयं भागद्वये विभक्तमस्ति–स्वभावोक्तिः वक्रोक्तिश्चेति। तत्र तेन जातिगुणक्रियाद्रव्यरूपाणां पदार्थानां स्वाभाविकवर्णने स्वभावोक्तिः स्वीकृता। स्वभावोक्तिभिन्नाः सकला अपि चत्मकारपरिपूर्णा उक्तयो वक्रोक्तिमध्ये गणिताः। उपमादयोलङ्कारा अपि तत्रैव समायान्ति। अस्यां वक्रोक्तौ श्लेषेण शोभा वर्धते। भामह इव दण्ड्यपि वक्रोक्त्यविशोक्त्योरभेदं प्रतिपादयामास। परं स्वाभावोक्तेस्ततो भिन्नतां प्रतिपादितवान्।

आचार्यवामनेन सादृश्यमूलकलक्षणास्थले वक्रोक्त्यलङ्कारं स्वीकृत्य तत्क्षेत्रं संकुचितं विहितम्। तन्मते सादृश्यमूला लक्षणैव वक्रोक्तिः। वस्तुतो वामनस्य कान्तिगुणः कुन्तकस्य वर्णविन्यासवक्रतारूप एवास्ति परं सुस्पष्टं वामनेन तस्योल्लेखो नहि कृतः। रुद्रटेन वक्रोक्तिं वाक्छलाश्रितं शब्दालङ्कारं मत्वा भेदद्वयं कृतम्–काकुवक्रोक्तिः श्लेषवक्रोक्तिश्चेति। अग्निपुराणेऽपि वक्रोक्तेः काकुभङ्गश्लेषाभ्यां द्वौ भेदौ दृश्यते। तथापि वाक्छलरूपैव वक्रोक्तिः।

मनोरथकवेरनुसारेण वक्रोक्तिरलङ्कारसामान्यरूप। भोजराजेन अन्यैराचार्यैः प्रतिपादितानां वक्रोक्तिलक्षणानामुल्लेखो विहितः। उक्तं च–

**यदवक्रं वचः शास्त्रे लोके च वच एव तत्।**
**वक्रं यदर्थवादादौ तस्य काव्यमिति स्मृतिः।।**[२]

वक्रोक्तिसिद्धान्तस्य संस्थापकेन आचार्यकुन्तकेन स्वपूर्ववर्तिनामाचार्याणां मतेषु न्यनूतामनुभूय कश्चिन्नूतनो मार्गः प्रदर्शितः। तेनोक्तं यत् काव्ये वक्रोक्तिरेव सर्वाधिकं चमत्कारमुत्पादयति। अस्मात् हेतोः 'वक्रोक्तिरेव काव्यस्य जीवितम्' इति सिद्धान्तः स्वीकार्यः। वैदग्धभङ्गीभणिदिति वक्रोक्तिः कथ्यते। सा च प्रसिद्धाभिधानभिन्ना काचिद् विलक्षणैव वर्णनपद्धति। वैदग्धं हि विदग्धभावः– काव्यनिर्माणस्यापूर्वकौशलम्, तस्य भङ्गी चमत्कृतिः तया भूषिता कविभणितिरेव वक्रोक्तिः कथ्यते। वक्राः विचित्रा–विलक्षण–चमत्कारपूर्णा उक्तिरेव वक्रोक्तिरिति। कुन्तकाचार्यमते वक्रोक्तिः केवलमेकोऽलङ्कारप्रकारो नास्ति प्रत्युत् सर्वातिशयायिचमत्कारपरिपूर्णायां वक्रोक्तावेव गुण–रीत्यलङ्काराणां सकलानामपि काव्यसौन्दर्योत्पादकतत्वानामन्तर्भावो भवति। समस्तो ध्वनिप्रपञ्चोऽत्र समायान्ति। वक्रोक्तिं विना तु काव्यलक्षणमपि प्रतिपादयितुं न शक्यते। उक्तं च स्वयं तेनैव–

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।**[३]

वक्रोक्तिः खलु सहृदयहृदये कमप्यपूर्वमानन्दमुत्पादयति। तस्यां कवेः प्रौढप्रतिभायाश्चमत्कारो विलसति। तत्र शास्त्रे लोकव्यवहारे च प्रसिद्धशब्दार्थयोः प्रयोगाद् वैलक्षण्यमुत्पद्यते। ऐतेषामेवोल्लेखः कुन्तकेन काव्यलक्षणनिरूपणे विहितः।

कुन्तकस्य वक्रोक्तिविमर्शस्तु वक्रोक्तिमीमांसायाः पराकाष्ठा। वक्रोक्तेः यावान् यश्च विचारोऽपेक्ष्यते काव्यशास्त्रे, तावान् सर्वोऽपि पराकाष्ठात्मको विमर्शः वक्रोक्तिजीविते विजृम्भते। अतो भामहदण्डिभोजकुन्तकादीनां वक्रोक्तिस्वरूपे आपातत ऐक्येऽपि सूक्ष्मेक्षिकया विचारणानन्तरं सर्वत्र भेदो विलोक्यते। अत एव अनया वक्रोक्त्या कुन्तकः काव्यशास्त्रे क्रमेण गौणत्वं भजनमानमलङ्कारप्रभावं समुन्नयते, समर्थ्यते च सर्वेषामपि काव्यतत्त्वानामलङ्काररूपत्वम्। तन्मते शब्दार्थावलङ्कार्यौ भङ्गीभणितिरूपा वक्रोक्तिश्च केवलमपूर्वालङ्कृतिः। उक्तं च–

**उभवेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्धभङ्गीभणितिरुच्यते।।**[४]

सैव विचित्राभिधा रूपा वक्रोक्तिः काव्यस्यात्मा। कुन्तकेनोक्तं यत् काव्ये सौन्दर्यं वक्रताप्रभावादेव उत्पद्यते। अतो वर्णविन्यासादारभ्य प्रबन्धं यावत् वक्रोक्तेः साम्राज्यं स्वीकृत्य तेन काव्यात्मनः

सर्वोच्चासने वक्रोक्तिः संस्थापिता। यथा आनन्दवर्धनेन व्यंजनया ध्वनिसिद्धान्तः प्रतिष्ठापितस्तथैव कुन्तकेन विचित्राभिधया वक्रोक्तेः साम्राज्यं संस्थापितम्। तेन त्रयो मार्गाः प्रतिपादिताः-सुकुमारः, विचित्रो मध्यममार्गश्चेति।

## सन्दर्भाः

१. भामहालङ्कारः २।२।८४
२. शृ०प्रकाशः ९।६०
३. वक्रोक्तिजीवितम् ७।११, पृ० ८१, प्रथम संस्करण, २०१६
४. वक्रोक्तिजीवितम् १९, पृ० ११९

## सन्दर्भ-ग्रन्थ-सूची


१. "भामहालङ्कार सूत्र", चौखम्बा प्रकाशन, वाराणसी
२. "शृङ्गारप्रकाश", मोतीलाल बानरसीदास पब्लिशर्स प्राइवेट लिमिटेड, दिल्ली; नाग पब्लिशर्स, दिल्ली, प्रथम संस्करण, २००१
३. "वक्रोक्तिजीवितम्" प्रथम उन्मेष, शिवालिक प्रकाशन, २७/१६, शक्तिनगर, दिल्ली, संस्करण, २०१६


□□

# कालिदासीयकाव्येषु वक्रोक्तिचिन्तनम्

–अनुराधा मल्लिक

## उपोद्धातः

कविविहितस्य शब्दगुम्फनात्मकस्य कर्मविशेषस्य काव्यम् इति संज्ञा प्रसिद्धा अस्ति। तच्च गद्य–पद्य–उभयरूपेण त्रिधा विभक्तम्। तेषु कदाचित् गद्यभागे पद्यत्वं विद्योतते, क्वचित् च पद्यभागे पद्यत्वधर्मः लुप्तः वर्तते इत्येवं गद्यपद्यतारतम्यस्य साधारणपद्धत्यतिरिक्ता काचन सरणिः विज्ञायते। सा एव सरणिः श्रीमता कुन्तकाचार्येण पूर्वाचार्याणाम् अर्थात् भरत–भामह–दण्डि–वामन–आनन्दवर्धनादीनां मतानि पर्यालोच्य काव्याकाव्यविभेदकत्वेन स्वीये वक्रोक्तिजीवितनामके ग्रन्थे वक्रोक्तिनाम्ना निरूपिता। यद्यपि कुन्तकाचार्यात् पूर्वमपि विभिन्नैः कविभिः काव्यशास्त्राचार्यैश्च प्रकारान्तरेण बीजरूपेण वा वक्रोक्तिविषयकः विचारः विहितः तथाऽपि काव्यजीवितरूपेण वक्रोक्तिनाम्नः तत्त्वस्य निरूपणं विवेचनं च सर्वप्रथमं दशमशताब्द्यां श्रीमता कुन्तकाचार्येण एव विहितम् अस्ति।

## वक्रोक्तिपरिचयः

स्वभावविरुद्धस्य चमत्कारयुक्तस्य, उक्तविशेषस्य वक्रोक्तिरित्यर्थः काव्यशास्त्रबिशारदैः अङ्गीक्रियते। तदेवोक्तं कुन्तकाचार्येण–

**कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षट्।**
**प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशोभिनः।।** इति[१]

अस्यार्थस्तु–कवीनां व्यापारात्मिकायां काव्यक्रियायां यद् वक्रत्वम् अर्थात् प्रसिद्ध–प्रस्थानव्यतिरेकिभावः, तस्य विच्छित्तिशोभिनःवैचित्र्यभङ्गीभ्राजिष्णवः इत्यादिप्रकारेण यद्यपि बहवः भेदाः वर्तन्ते तथाऽपि मुख्यतया षट् एव भवन्ति इति। अनेन इदं बोधयति यद् वक्रोक्तिर्नाम कविव्यापारात्मकस्य काव्यस्य प्रसिद्धप्रस्थानव्यतिरेकभावः अर्थात् वैचित्र्यता इति। अन्ये अपि आचार्याः वक्रोक्तिविषये विचारं प्रत्यपादयन्। यथा–

**(१) वामानाचार्यः** "उन्मिमीलकमलं सरसीनां कैरवं च निर्मीमील मुहूर्तात्" इत्युदाहरणकथनेन वक्रोक्तिम् अलङ्कारेषु परिगणय्य सादृश्यात् लक्षणा वक्रोक्तिः[२] इत्यवदत्।

**(२) आनन्दवर्धनाचार्यः** ध्वन्यालोके उत्कृष्टा सङ्घटना एव वक्रोक्तिः इति कथयति।

**(३) भामहचार्यास्तु** सर्वेषु अलङ्कारेषु अनुस्यूततया वक्रोक्तिः अवश्यं भवेत् इति तदभावे अलङ्काराः मनो विनोदयितुम् अशक्ता भवेयुः इति वक्रोक्तेः प्राधान्यम् अङ्गीचकार।

**(४) आचार्यमम्मटस्तु** सर्वे अलङ्कारःअतिशयोक्तिमूलकाः इति, अतिशयोक्तिरेव वक्रतां

जनयति इति भावयामास। अतिशयः, वक्रता, चारुत्वम् इत्येते शब्दाः मम्मटस्य मते पर्यायभूताः भवन्ति।

**(५) आचार्यः** दण्डी भिन्नं द्विधा स्वभावोक्ति वक्रोक्तिश्चेति वाङ्मयम् [३]इत्यादिकथनपुरस्सरं स्वभावोक्तिर्नाम यथास्थितं उपवर्णनम्,वक्रोक्तिरित्युक्ते वक्रतया अर्थात् चमत्कारबन्धुरतया वस्तुनः वर्णनम् इति वक्रोक्तिविषये अवदत्।

एतत् सर्वमालोच्यमाने इदं स्पष्टं ज्ञायते यद् आचार्यःकुन्तकः वक्रोक्तिं विशालतमां विधाय, उत्तमकाव्यस्य आवश्यकानि सकलानि लक्षणानि वक्रोक्तौ सन्निवेशितवान् इति। किञ्च अकथयन् यत् वक्रतापदस्य सौन्दर्यम् इत्यर्थो वेदितव्यः। तदर्थं कविभिः समुचितः यत्नः कार्यः इति।

एषा वक्रोक्ति पूर्वोक्तरूपेण प्राधान्येन षोढा भवति। ताश्च यथा-वर्णविन्यासवक्रता, पदपूर्वार्धवक्रता, प्रत्ययवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रबन्धवक्रता चेति। एतेषु षट् प्रकारेषु प्रमुखकाव्येषु दृश्यमानान् कांश्चन प्रकारान् सोदाहरणं विवृणे।

**वर्णविन्यासवक्रता**

**वर्णविन्यासवक्रत्वम्**[४] इत्यादिना वर्णविन्यासवक्रतायाः स्वरूपं वर्णयति आचार्यः कुन्तकः। तथा च वर्णानां विन्यासः वर्णविन्यासः, अक्षराणां विशिष्टन्यसनं तस्य वक्रत्वं वक्रभावः, प्रसिद्धप्रस्थानव्यतिरेकिणा वैचित्र्येण उपनिबद्धः संनिवेशविशेषविहितः तद्विदाह्लादकारी शब्दशोभातिशयः प्रथमः प्रकारः। अयञ्च वर्णविन्यासः कालिदासीयकाव्येषु बहुत्र दृश्यते। यथा-

महाकविकालिदासप्रणीते कुमारसम्भवे यत्र तत्र वर्णविन्यासवक्रता दृश्यते। द्वितीये सर्गे तारकासुरपराजितानां देवेन्द्र-वरुण-यम-आदि देवानां परमेश्वरशरणगमने भगवतः परमेश्वरस्य स्तवने-

**आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना।**
**आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे।।**[५]

इत्यस्मिन् श्लोके चतुर्षु अपि पादेषु पुनः पुनः तकार-मकार-नकाराणाम् आवृत्तिः दृश्यते। एवञ्च यः अक्षराणां विशिष्टन्यसनं वर्णविन्यासः प्रथमः प्रकारः प्रोक्तः वक्रतायाः स च प्रकारः प्रकृते श्लोके दृश्यते। यश्च काव्ये वैभवातिशयमपि बिभर्त्ति।

एवमेव रघुवंशेऽपि बहुषु स्थलेषु वर्णविन्यासवक्रता दृश्यते। तत्र एकम् उदाहरणं प्रथमसर्गे वैवस्वतमनुवर्णने दृश्यते-

**वैवस्वतो मनुर्नाम माननीयो मनीषिणाम्।**
**आसीन्महीक्षितामाद्यः प्रणवच्छन्दसामिव।।**[६]

इत्यस्मिन् श्लोके ओंकारः सर्वैः विद्वद्भिः पूज्यते सर्ववेदानाम् अग्रे कथ्यते तथैव वसुधायां नृपवंशस्य प्रवर्तयिता स श्रीमान् वैवस्वतो मनुरेवास्य सुमहतः रघुवंशस्य प्रथमः पुरुष आसीत् इति। वर्णनसमये मनुः, नाम, माननीयः, मनीषिणाम् इत्येवंरूपेण मकार–नकारयोः आवृत्तिः दृश्यते या च वर्ण्यमानार्थानुकूलतां भजन्ती सहृदयहृदयान् आह्लादयन्ती वर्णविन्यासवक्रतां निर्दिशति।

## पदपूर्वार्धवक्रता

**पदपूर्वार्धवक्रता**[७] इत्यादिना पदस्य सुबन्तस्य तिङन्तस्य वा यत् पूर्वार्धं प्रातिपदिकलक्षणं धातुलक्षणं वा तस्य वक्रता वक्रभावः अर्थात् विन्यासवैचित्र्यं पदपूर्वार्धवक्रता इति व्यपदिशति आचार्यः कुन्तकः। तत्र पदपूर्वार्धवक्रतायाः बहवः प्रकाराः वर्तन्ते। यथा–रूढिवैचित्र्यवक्रता, पर्यायवक्रता, विशेषणवक्रता, संवृतिवक्रता, वृत्तिवैचित्र्यवक्रता, लिङ्गवक्रता, क्रियावैचित्र्यवक्रता इत्येवमादिरूपेण। एतेषु प्रकारेषु पर्यायवक्रता कालिदासीयकाव्येषु तत्र दृश्यते। सा च कीदृशी इत्युक्ते–यत्र अनेकशब्दाभिधेयत्वे वस्तुनः किमपि पर्यायपदं प्रस्तुतानुगुणत्वेन प्रयुज्यते तत्र पर्यायवक्रता ज्ञेया। तत्र रघुवंशे तृतीयसर्गे–

**हरिर्यथैकः पुरुषोत्तमः स्मृतो महेश्वरस्त्र्यम्बक एव नापरः।**
**तथा विदुर्मां मुनयः शतक्रतुं द्वितीयगामी न हि शब्द एष नः।।**[८]

इत्यस्मिन् श्लोके अनेकेषु पदपूर्वार्धवक्रतायाः भेदेषु पर्यायवक्रता दृश्यते। अत्र पितुः दिलीपमहाराजस्य अश्वमेधीययज्ञस्य अश्वम् अपहरन्तम् इन्द्रं तिरस्कुर्वतःरघोः प्रश्नोत्तरं यच्छति देवेन्द्रः यद् अस्मिन् संसारे यथा पुरुषोत्तमशब्दः नारायणमेव बोधयति, यथा च महेश्वरशब्दः त्रिनेत्रं शङ्करमेव बोधयति, तथा शतक्रतुशब्द मामेव बोधयति, एष द्वितीयगामी शब्दः नास्ति इति। अत्र यद्यपि–

**इन्द्रो मरुत्वान् मघवान् बिडौजाः पाकशासनः।**
**वृद्धश्रवाःसुनासीरः, पुरुहूतः पुरन्दरः।।**[९]

इत्येवमादिरूपेण नानाविधपर्यायशब्दसत्वे अपि शतक्रतुशब्दस्य प्रयोगः अभिधेयार्थस्य अन्तरङ्गस्थितिप्रकाशनाय विहितः इति ज्ञायते। यस्मात् शतं क्रतवः यस्य असौ शतक्रतुः इतिकथनेन शतं यज्ञाः केवलम् इन्द्रस्य एव सम्पन्नाः, यस्मात् कारणात् सः देवेन्द्रपदवीं लब्धवान्। अतः स्वपदरक्षणाय एवं महाराजदिलीपस्य अश्वम् अपहृतवान् इत्यर्थप्रतिपादनाय शतक्रतुशब्द एव उचितः इति वक्रता स्फुटति अत्र।

अपि च कुमारसंभवे प्रथमसर्गे यथा–

**स कृत्तिवासास्तपसे यतात्मा गङ्गाप्रपातोक्षितदेवदारु।**
**प्रस्थं हिमाद्रेर्मृगनाभिगन्धि किञ्चित् क्वणत्किन्नरमध्युवास।।**[१०]

अस्य श्लोकस्यार्थस्तु दक्षरोधात् स्वशरीरत्यागानन्तरं प्रियतमावियुक्तः भगवान् शङ्करः समाधिम् आप्तुम् हिमाद्रेः प्रस्थं किञ्चित् अध्युवास इति। तथा च सः कृत्तिवासशः चर्माम्बरः, यतात्मा नियतचित्तः, पशुपतिः शिवः तपसे हिमाद्रेः गङ्गायाः प्रपतनस्थाने उत्थितदेवदारुस्थाने कुत्रचित् उवास इति। अत्र सत्सु अपि शङ्करस्य–

**ईश्वरः शर्व ईशानः शङ्करश्चन्द्रशेखरः।**
**भूतेशः खण्डपरशुः गिरीशो गिरिशो मृडः।**
**मृत्युञ्जयः कृत्तिवासाः पिनाकी प्रमथाधिपः।।**[११]

इति बहुषु पर्यायपदेषु कृत्तिवासाः इति शब्द प्रयुक्तः महाकविना। तत्रैव वक्रतासौन्दर्यं परिदृश्यते। यतः कृत्तिः वासः यस्य सः कृत्तिवासाः इति व्युत्पत्तिः। अनेन च तपसः परिकरणभूतम् अजिनधारणमपि उक्तं भवति। एवञ्च तपोऽवस्थायां शब्दोऽयमेव उचित इति धिया महाकविना अस्य शब्दस्यैव प्रयोगेन पर्यायवक्रतया वर्ण्यमाने विषये सौन्दर्यं वर्धितम्।

**प्रत्ययवक्रता**

**वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः**[१२] इत्यादिना पदपरार्द्धवक्रतात्वेन अभिधीयमानां प्रत्ययवक्रतां विवृणोति आचार्यः कुन्तकः। वक्रभावस्य अन्योऽपि प्रभेदः विद्यते यश्च प्रत्ययाश्रयः। वक्रतायाः अयं प्रकारः मेघदूते महाकविना बहुधा आश्रितः दृश्यते। तत्रापि उत्तरमेघे बहुषु स्थलेषु प्रत्ययवक्रता दृश्यते। यथा–

**शेषान्मासान् विरहदिवसस्थापितस्यावधेर्वा,**
**विन्यस्यन्ती भुवि गणनया देहलीदत्तपुष्पैः।**
**मत्सङ्गं वा हृदयनिहितारम्भमास्वादयन्ती,**
**प्रायेणैते रमणविरहेष्वङ्गनानां विनोदाः।।**[१३]

इत्यस्मिन् श्लोके यथा प्रियतमायाः यक्षस्य विरहे शेषान् मासान् भुवि देहलीदत्तपुष्पैः गणनया विन्यस्यन्त्या; अथवा प्रियतमसङ्गं हृदयारम्भम् आस्वादयन्त्याःइति शतृप्रत्ययःपदमध्ये वर्ण्यमानविप्रलम्भशृङ्गारस्य अतीत–अनागतां स्थितिं विहाय वर्तमानविरहावस्थां सूचयति। एवञ्च वर्तमानकालाभिधायिशतृप्रत्ययःअत्र विन्यस्यन्ती इत्यत्र, आस्वादयन्ती इत्यत्र च प्रयुक्तःयश्च पदमध्ये सौन्दर्याभिव्यक्त्या पाठकान् रञ्जयति।

एवमेव रघुवंशे सप्तमे सर्गे–

**कश्चिद्द्विषत्खड्गहृत्तोत्तमाङ्गः सद्यो विमानप्रभुतामुपेत्य।**
**वामाङ्कसंसक्तसुराङ्गना स्वं नृत्यत्कबन्धं समरे ददर्श।।**[१४]

अत्र इन्दुमत्याः पाणिग्रहणे सम्पन्ने तत्र स्वयंवरे समागतानां नृपाणाम् ईर्ष्यया मार्गे राजकुमारेण सह जातयुद्धावस्थां वर्णयति कविः। अर्थस्तु द्विषतः कृपाणेन छिन्नशिरः कश्चिद् भटः सद्यः देवत्वं प्राप्य सुराङ्गनासहितः सन् युद्धे नृत्यन्तं निजं रुण्डम् अवलोकयामास इत्यर्थः। अत्र नृत्यत् कबन्धम् इत्यत्र शतृप्रत्ययस्य प्रयोगः दृश्यते यश्च शत्रोः दुर्गतिं च प्रदर्शयति राज्ञः प्रभावं च प्रदर्शयति काव्यस्य शोभां च वर्धयति।

**वाक्यवक्रता**

वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।
यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।।[१५]

इत्यादिना वाक्यवक्रतायाः स्वरूपं भेदञ्च आचार्यः कुन्तकः। अर्थस्तु पदसमुदायभूतस्य वाक्यस्य भङ्गिभणितवैचित्र्यम्, अन्यः अर्थात् पूर्वोक्तवक्रताव्यतिरेकी समुदायवैचित्र्यनिबन्धः इति। एषा वाक्यवक्रता सहस्रधा भिद्यते अर्थात् बहुप्रकारं भेदम् आसादयति। निष्कृष्टस्तु योऽयं वाक्यस्य वक्रभावः बहुप्रकारः, अस्मिन् अलङ्कारवर्गः सर्वोऽपि अन्तर्भविष्यति। वक्रतायाः अस्य प्रकारोऽपि कविकुलगुरोः काव्येषु दृश्यते। आदौ यथा कुमारसंभवे प्रथमे सर्गे एवं सहजवस्तुविमर्शः दृश्यते यथा–

कपोलकण्डूकरिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम्।
यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति।।[१६]

इति हिमाद्रौ गजैः गण्डस्थलकण्डू अपनेतुं घर्षितानां सरलद्रुमाणां सम्बन्धिया करिकपोलघर्षणात् क्षरितानि क्षीराणि येषां तेषां भावः तत् तथा हेतुनोत्पन्नः गन्धः सानूनि सुरभीकरोति इति वर्णयति। अत्र हि सुगन्धः वायु हिमाद्रौ प्रसरति इति भङ्ग्या महाकविना करिकपोलकण्डूयनादिक्रियया वर्णनं सहजवस्तुनः सौन्दर्यं प्रकाशयति इति सहजवस्तुविमर्शः प्रकृते दृश्यते। अत एव महाकविना अपि अत्र अलङ्कारपरिकल्पना न कृता वर्तते।

अपि च रघुवंशे आदावेव–

त्यागाय संभृतार्थानां सत्याय मितभाषिणाम्।
यशसे विजिगीषूणां प्रजायै गृहमेधिनाम्।।
शैशवेऽभ्यस्तविद्यानां यौवने विषयैषिणाम्।
वार्द्धके मुनिवृत्तीनां योगेनान्ते तनुत्यजाम्।।
रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्।[१७]

इति रघुवंशस्थानां नृपतीनां वर्णनसमये ये सत्पात्रेभ्यो दातुमेव अर्थसञ्चयं कृतवन्तः, बहुभाषणे

अनृतमपि स्यादिति हेतोः मितमेव भाषन्ते स्म, ये पुण्ययशोलाभाय दिग्विजयं कृतवन्तः, सुतार्थमेव स्त्रीपरिणयं कृतवन्तः, ये बाल्यावस्थायां सर्वाः विद्याः अधीतवन्तः, ये युवावस्थायां धर्मानुसारेण भोग्यसुखं सेवितवन्तः, वृद्धवयसि सर्वभोगनिवृत्ताः ऋषिव्रतम् आश्रितवन्तः, ये अन्तकाले योगमार्गेण शरीरं त्यक्त्वा मुक्तिं लब्धवन्तः, तेषां रघूणामन्वयं वक्ष्ये इति रघुवंशनृपतीनां सहजस्वभाववर्णने कस्यापि अलङ्कारस्य अपेक्षा नास्ति। तथा च प्रकृते सहजवस्तुविमर्शः सन्निविष्टः महाकविना।

### प्रकरणवक्रता

**वक्रभावः प्रकरणे प्रबन्धे वास्ति यादृशः।**
**उच्यते सहजाहार्यसौकुमार्यमनोहरः।।**[१८]

इत्यादिना प्रकरणवक्रतायाः प्रबन्धवक्रतायाः च स्वरूपं वर्णयति आचार्यः कुन्तकः। वक्रभावः विन्यासवैचित्र्यं प्रकरणे यादृग् विद्यते प्रबन्धे वा नाटकादौ, सः सहजाहार्यसौकुमार्यमनोहरः। निष्कृष्टस्तु सहजम्–स्वाभाविकम्, आहार्य–व्युत्पत्त्युपार्जितम्, सौकुमार्यम्–रामणीयकम्, तेन मनोहरः–हृदयहारी भवेत् इति। अस्याः वक्रतायाः नवभेदाः वर्तन्ते। ताश्च–पात्रप्रवृत्तिवक्रता, उत्पाद्यलावण्यवक्रता, उपकार्योपकारकवक्रता, आवृत्तिवक्रता, प्रासङ्गिकप्रकरणवक्रता, प्रकरणरसवक्रता, अवान्तरवस्तुवक्रता, नाटकान्तर्गतनाटकवक्रता, सन्ध्यङ्गविनिवेशवक्रता इत्येताः। एषु षड्प्रकारेषु प्रकरणरसवक्रता मेघदूते उत्तरमेघे अत्यन्तरमणीयतया प्रतिपादिता कविकुलगुरुणा। यथा–

**श्यामास्वङ्गं चकितहरिणीप्रेक्षणे दृष्टिपातं**
**वक्रच्छायां शशिनि शिखिनां बर्हभारेषु केशान्।**
**उत्पश्यामि प्रतनुषु नदीवीचिषु भ्रूविलासान्**
**हन्तैकस्मिन्क्वचिदपि न ते चण्डि सादृश्यमस्ति।।**[१९]

इत्यस्मिन् श्लोके विप्रलम्भशृङ्गारस्य पराकाष्ठादृश्यते। वस्तुतः यक्षयक्षिण्योः आदर्शप्रेम्णा समस्तमानवानां चेतोभिःअनुभूयमानविप्रलम्भस्यावस्था एव काव्यस्य आधारतले सुचित्रिता कविना। यद्यपि बहुषु स्थलेषु विप्रलम्भशृङ्गारस्य निष्पत्तिः कविना प्रदर्शिता तथाऽपि प्रियतमां यक्षिणीं प्रति सन्दिश्यमानाय मेघाय स्वीयावस्थावर्णने यक्षस्य वचनेषु तत्प्रतिबिम्बते। सः वदति यद्–प्रियङ्गुलतासुशरीरं तर्कयामि, चकितहरिणीनां प्रेक्षणे ते दृष्टिपातं, चन्द्रे मुखकान्तिम्, बर्हिणां बर्हसमूहेषु केशान्, स्वल्पासु नदीनां वीचिषु भ्रूविलासान् उत्पश्यामि। हे चण्डि, तथाऽपि मनोवृत्तिः नास्ति। कस्मिन्नपि वस्तुनि एकत्र तव सादृश्यं नास्ति इति वर्णयति। अतः न निर्वृणोमिइति विप्रलम्भस्य पराकाष्ठां वर्णयति अत्र कविः।

### प्रबन्धवक्रता

प्रबन्धवक्रताविषये आचार्यः कुन्तकः एवं लिखति यत्–कुत्रचिन्महाकविविरचिते रामकथोप–

निबन्धे नाटकादौ पञ्चविधवक्रतासामग्रीसमुदायसुन्दरं सहृदयहारि महापुरुषवर्णनम् उपक्रमे प्रतिभासते। परमार्थतस्तु विधिनिषेधात्मकधर्मोपदेशः पर्यवस्यति, रामवद्वर्तितव्यं न रावणादिवत् इति। सा इयं प्रबन्धवक्रता रसपरिवर्तनवक्रता, समापनवक्रता, कथाविच्छेदवक्रता, आनुषङ्गिकफलवक्रता, नामकरणवक्रता, कथासाम्यवक्रता इत्येवंरूपेण षोढा भवति। तत्र कुमारसंभवस्य मूलकथा महाभारते, लिङ्गमहापुराणे, शिवपुराणे, स्कन्दपुराणे च समुपलभ्यते। विशिष्टरूपेण स्कन्दपुराणे शिवपुराणे च महर्षिणा वेदव्यासेन जगन्लाभाय भगवतः शङ्करस्य भगवत्याः पार्वत्याः चरितम् उपनिबद्धम्। तत्र भगवतः विभूतिवर्णनसमये महातेजस्विनः कुमारस्य चरितमपि प्रकाशितं भवति। यद्यपि पुराणेषु कथावस्तुनः लक्ष्यं रसालङ्कारादियोजनं नास्ति, अपि तु कथावस्तुभिः भगवतः विभूतिमाहात्म्य-प्रकाशनमेव येन जीवानां परमात्मनि रतिः जायेत तथाऽपि काव्ये कवेः लक्ष्यं पुरुषार्थचतुष्टय-निबन्धनपूर्वकं रसाभिव्यक्तिनिबन्धमेव पारमार्थिकत्वं भवति।

अतः इतिवृत्तवशा आयाताम् स्थितिं परित्यज्य रसानुगुणं कथावस्तुनः योजना विधातव्या इति आलङ्कारिकैरपि अङ्गीकृतम्। एवञ्च कुमारसंभवस्य मूलकथा यद्यपि शिवपुराणेन स्कन्दपुराणेन च सामञ्जस्यं भजते तथाऽपि शिवपुराणे स्कन्दपुराणे च भक्तिसंस्थापनं मुख्यहेतुः। परन्तु कुमारसंभवमहाकाव्ये रसभावादियोजना कविना अभीष्टा। यद्यपि वाच्यवाचकरूपेण कुमारसम्भवे प्रधानरसः शृङ्गार एव तथाऽपि उद्देश्यदृष्ट्या व्यङ्ग्यार्थमुखेन अनुशीलयामश्चेत् वीररसप्रधानं महाकाव्यमिदम् इति ज्ञातुं शक्नुमः। एवञ्च प्रकृते रसपरिवर्तनरूपवक्रता दृश्यते। एवमन्येषु काव्येषु अपि दृश्यते। यथा रघुवंशस्य मूलकथा रामायणात् इति आलङ्कारिकैः अभिप्रेते सति रामायणस्य शान्तरसप्रधाने रघुवंशे वीररसः प्रधानो दृश्यते इत्येवं न केवलं कविकुलगुरोः काव्येषु अपि च अन्येषु अपि महाकवीनां काव्येषु रसपरिवर्तनरूपवक्रता अवश्यं दृश्यते एव।

**उपसंहारः**

एवं न केवलं महाकविना कालिदासेन अपि च अन्यैरपि बहुभिः कविभिः स्वीयकाव्येषु वक्रतायाः सन्निवेशः कृतः वर्तते। एवञ्च सर्वतः आलोच्यमाने इदं सम्यक् ज्ञातुं शक्यते यद् महाकविमङ्खकाचार्यस्य अभिप्रायानुसारम् इयं वक्रता न श्वपुच्छतुल्या, किन्तु चन्द्रकलासदृशी। तथा च वक्रोक्तिः नाम केवलम् उक्तिगता वक्रता एव न, तस्यां वक्रतायां चमत्कारित्वमपि अवश्य स्यात्। एवञ्च सहृदयहृदयानन्दसन्धायिनी पदभावसङ्घटना वक्रोक्तिः, सा च वैदग्ध्यभङ्गी इति यत् कुन्तकस्य वचनम्, तत् सार्थकम् आप्नोति। अत एव खलु शृङ्गारप्रकाशे अपि भोजराजः–

वक्रत्वमेव काव्यानां परा भूषेति भामहः।
श्लेषः पुष्णाति सर्वासु प्रायो वक्रोक्तिषु स्थितम्।।[२०]

इति प्रत्यपादयत्।

## सन्दर्भाः

१. वक्रोक्तिजीवितम् १।१८
२. काव्यालङ्कारसूत्राणि ।८
३. काव्यादर्शः २।३६३
४. वक्रोक्तिजीवितम् १।१९
५. कुमारसंभवम् २।१०
६. रघुवंशम् १।११
७. वक्रोक्तिजीवितम् १।१९
८. रघुवंशम् ३।४९
९. अमरकोशः १।१।४२
१०. कुमारसंभवम् १।५४
११. अमरकोशः १।३१, ३२
१२. वक्रोक्तिजीवितम् १।१९
१३. मेघदूतम्, उत्तरमेघः २९
१४. रघुवंशम् ७।५१
१५. वक्रोक्तिजीवितम् १।२०
१६. कुमारसंभवम् १।९
१७. रघुवंशम् १।७, ८, ९
१८. वक्रोक्तिजीवितम् १।२१
१९. मेघदूतम्, उत्तरमेघः ४३
२०. शृङ्गारप्रकाशः, दशमप्रकाशः,पृ० ४५४

□□

# संस्कृत काव्यशास्त्र का वक्रोक्ति सिद्धान्त

–प्रो० गिरिजाशंकर शास्त्री

आचार्य कुन्तक का वक्रोक्ति सिद्धान्त संस्कृत साहित्य का महत्त्वपूर्ण सिद्धान्त है। इसका सूत्रपात छठीं शताब्दी में भामह ने कर दिया था।[१] दशम शती ई० में आचार्य कुन्तक ने अपनी प्रखर प्रतिभा एवं सूक्ष्म चिन्तन के द्वारा वक्रोक्ति का साङ्गोपाङ्ग, क्रमबद्ध सविस्तर विवेचन प्रस्तुत कर मौलिक सिद्धान्त की स्थापना की।[२] आचार्य कुन्तक ने वक्रोक्ति को काव्य का जीवन (आत्मा) माना है, इसीलिए इन्होंने अपने ग्रन्थ का नाम 'वक्रोक्तिजीवित' रखा है। आचार्य कुन्तक के वक्रोक्ति सिद्धान्त से पूर्व काव्यजगत् में आचार्य आनन्दवर्धन का ध्वनि सिद्धान्त प्रतिष्ठित हो चुका था। आनन्दवर्धन के ध्वनि सिद्धान्त के प्रत्युत्तर में विकल्प रूप में आचार्य कुन्तक ने वक्रोक्ति सिद्धान्त को प्रतिष्ठापित किया। आचार्य कुन्तक कविता का चमत्कार कवि की कथन शैली में देखते हैं। भामह इनके प्रेरक माने जा सकते हैं। किन्तु वक्रोक्ति सम्प्रदाय के प्राकट्य में भामह की अपेक्षा आनन्दवर्धन अधिक प्रेरक माने जा सकते हैं। क्योंकि वक्रोक्तिजीवित रचना के समय ध्वन्यालोक ग्रन्थ कुन्तक के सामने था। आनन्दवर्धन ने ध्वनि (व्यंग्य अर्थ) को काव्यात्मा मानकर व्यंग्यविहीन काव्य को निर्जीव और काव्य की अनुकृति मात्र मानते हुए उसे काव्य श्रेणी से बाहर कर दिया। यह बात सिद्धान्त की तराजू पर भले उपयुक्त मान ली जाय, किन्तु व्यवहार धरातल पर यह सर्वथा सत्य नहीं है। काव्य प्रणयन के क्षेत्र में श्लेषयुक्त, द्विसन्धान, त्रिसन्धान एवं अन्य अनेक ऐसे काव्य मिलते हैं, जिनमें अधिकांश स्थलों पर केवल शब्दजाल और कवि की व्युत्पत्ति शक्ति विशेषरूप से दिखायी पड़ती है। ऐसे स्थल भी सहृदयाह्लादक एवं चमत्कार के विषय होते हैं। व्यंग्य विहीन काव्य आनन्दवर्धन की दृष्टि में अकाव्य या चित्र काव्य मात्र है। कुन्तक के समय में ऐसे व्यंग्यविहीन काव्य प्रचुर मात्रा में रचे जा चुके थे इसे अकाव्य मानना कुन्तक को उचित नहीं लगा। काव्य दृष्टि से ये निम्नस्तरीय भले ही हों किन्तु इन रचनाओं को काव्य क्षेत्र से बाहर कर देना न्यायसंगत नहीं होगा। इसी तथ्य को ध्यान में रखते हुए आचार्य कुन्तक ने यह स्वीकार किया कि–व्यंग्य से सर्वथाहीन काव्यस्थल भी कविकर्म कौशलजन्य चमत्कार से युक्त होने के कारण वक्रोक्ति के क्षेत्र में आ जाता है। वक्रोक्ति सिद्धान्त में कवि की वचनभंगी के साथ-साथ सहृदय को भी पर्याप्त महत्त्व दिया गया है।[३]

## वक्रोक्ति का शाब्दिक अर्थ

वक्रोक्ति शब्द दो शब्दों के संयोग से बना है–वक्र और उक्ति। वक्र का अर्थ टेढ़ा और उक्ति का अर्थ है कथन। किसी बात को सरल और सीधे शब्दों में न कहकर टेढ़े-मेढ़े ढंग से कहना वक्रोक्ति है–यह वक्रोक्ति का सामान्य अर्थ है। परन्तु काव्य में वक्रोक्ति के अन्तर्गत कविकर्मकौशलजन्यचारुता से पूर्ण उक्ति को ग्रहण किया जाता है। आचार्य कुन्तक ने इसे स्पष्ट करते हुए कहा है।[४]

वक्रोक्तिरेववैदग्ध्यभङ्गीभणितिरुच्यते।

वैदग्ध्यं विदग्धभावः, कविकर्मकौशलं, तस्य भङ्गी विच्छित्तिः, तया भणितिः। काव्यमीमांसा में राजशेखर की पत्नी अवन्तिसुन्दरी का मत है कि 'कवि उक्ति के चातुर्य से प्रस्तुत की जाने वाली वस्तु का स्वभाव निश्चित नहीं होता।' इस मत के प्रस्तुतीकरण में राजशेखर ने विदग्ध, भणिति और भङ्गी शब्दों का प्रयोग किया है।[५] आचार्य कुन्तक के काव्य में वक्रकविव्यापार और सहृदयाह्लाद को आवश्यक माना है।[६] यह बात यहाँ पर अवधेय है कि शास्त्र या लोकव्यवहार में प्रयुक्त होने वाले साधारण कथन, काव्य में वक्रोक्ति के विषय नहीं माने जाते। आचार्य कुन्तक का मत है कि 'शास्त्रादि में प्रसिद्ध, शब्द और अर्थ के सामान्य प्रयोग से भिन्न और प्रसिद्ध कथन से भिन्न विचित्र अभिधा (अर्थात् अभिधान या कथन का प्रकार) ही वक्रोक्ति है।[७] आचार्य भोज के अनुसार शास्त्र और लोक में प्रयुक्त अवक्र वचन मात्र वचन ही है, अर्थवाद[८] (निन्दा स्तुति विषयक अतिशयोक्ति) की वक्रता को काव्य कहा जाता है।[९] आचार्य अभिनवगुप्त वक्रोक्ति की लोकोत्तीर्णता का प्रतिपादन करते हैं।[१०]

### वक्रोक्ति शब्द का प्रयोग

जिस प्रकार ध्वनि के उदाहरण लक्ष्य ग्रन्थों में आनन्दवर्धन से पूर्व भी मिलते हैं वैसे ही आचार्य कुन्तक से पूर्व अनेक ग्रन्थों में वक्रोक्ति के पर्याप्त उदाहरण मिलते हैं। इस सन्दर्भ में बाणभट्ट, भवभूति और राजशेखर का उल्लेख कुन्तक ने स्वयं किया है।[११] वक्रोक्ति शब्द का प्रयोग बाणभट्ट ने अपनी 'कादम्बरी' में किया है। उनके द्वारा प्रयुक्त वक्रोक्ति शब्द, शास्त्रकारों द्वारा अभिमत अर्थ में है। 'राघवपाण्डवीय' नामक महाकाव्य के रचयिता कविराज ने वक्रोक्ति प्रयोग में निपुण कवियों में बाणभट्ट का नाम लिया है।[१२] बाणभट्ट के उज्जयिनी वर्णन में वक्रोक्ति शब्द का प्रयोग वाक्छल, चमत्कारपूर्णशैली एवं वाग्विदग्धता के लिए हुआ है–

वक्रोक्तिनिपुणेन आख्यायिकाख्यानपरिचयचतुरेण.... विलासिजनेनाधिष्ठिता।[१३]

बाणभट्ट ने एक अन्य स्थल पर शुक और सारिका के पारस्परिक क्रीडालाप के प्रसङ्ग में वक्रोक्ति शब्द का प्रयोग किया।[१४] अमरुक कवि ने वक्रोक्ति शब्द का प्रयोग वाणी के चमत्कार और परिहास के अर्थ में किया है[१५]–

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना।
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्।।

इन्हीं वक्रोक्ति कथनों को ध्यान में रखते हुए आचार्य कुन्तक ने वक्रोक्ति को न केवल अलङ्कार या भिन्न कथन शैली ही स्वीकार किया अपितु वक्रोक्ति को ध्वनि, रस आदि के समक्ष

उपस्थित किया। वक्रोक्ति के माध्यम से कुन्तक ने काव्य में मुख्य रूप से कलापक्ष के चमत्कार को परखने का प्रयास किया है साथ ही भावपक्ष को भी पर्याप्त महत्त्व प्रदान किया है वे काव्य और वक्रोक्ति दोनों को अनिवार्य रूप से सहृदयाह्लादक मानते हैं।

**शब्दार्थौ सहितौ वक्र कविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।**

(१) आचार्य कुन्तक प्रसिद्ध कथन प्रकार से भिन्न विचित्र अभिधा को वक्रोक्ति कहते हैं।[१६]

**प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा वक्रोक्तिः।**

(२) वक्रोक्ति के अन्तर्गत लोक व्यवहार में प्रसिद्ध साधारण कथन का ग्रहण नहीं किया जाता। इसके अन्तर्गत कवि कर्म कौशल जन्य चमत्कार पूर्ण कथन आता है। कुन्तक वक्रोक्ति को काव्य का अपूर्व अलङ्कार मानते हैं। वे शब्द और अर्थ को अलङ्कार्य और वक्रोक्ति को अलङ्कार कहते हैं।

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणिति रुच्यते।।**

(३) वक्र का तात्पर्य शास्त्रादि में प्रसिद्ध शब्द और अर्थ के सामान्य प्रयोग से भिन्न षड्विधा वक्रता से है।

**वक्रो योऽसौ शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्ध व्यतिरेकी षड्प्रकार वक्रताविशिष्टः कविव्यापारः।**[१७]

वक्रोक्ति को विचित्र अभिधा कहने से अभिधा का आशय अभिधा शक्ति से नहीं ग्रहण किया जाना चाहिए। अभिधा का तात्पर्य अभिधान या कथन से है।

(४) कुन्तक ने शब्द और अर्थ के वक्रोक्ति रूप अलङ्कार को वक्रता वैचित्र्य से सम्पन्न अभिधान या कथन प्रकार माना है।

**(५) वक्रतावैचित्र्य योगितयाभिधानमेवानयोरलङ्कारः।**[१८]

जिसे ध्वनिकार ने व्यंजना कहा है उसे कुन्तक ने विचित्रा अभिधा कहा है। वक्रोक्ति के अनेक भेदों में ध्वनिवादी की दृष्टि से व्यंग्य अर्थ की स्थिति रहती है इसका उल्लेख कतिपय स्थलों पर कुन्तक ने किया है।

**एष एव च शब्दशक्तिमूलानुरण न रूपव्यंग्यस्य पदध्वनेर्विषयः, बहुषु चैवं विधेषु सत्सु वाक्यध्वनेर्वा।**[१९]

**ध्वनिकारेण व्यंग्यव्यञ्जकभावोऽत्रसुतरां समर्थितः।**[२०]

(६) कुन्तक की वक्रोक्ति, कथन का एक विशिष्ट और विचित्र प्रकार है जिसमें प्रसङ्गभेद से ध्वनिवादी की दृष्टि से तीनों शब्दशक्तियों की स्थिति रहती है। कुन्तक ने वक्रोक्ति को अलङ्कार सामान्य कहा है।

**वक्रोक्ति सकलालङ्कारसामान्यम्।**[२१]

इसका आशय है। वक्रोक्ति कविता का सामान्य सौन्दर्य है। अलङ्कार सामान्य मानने में भामह का वक्रोक्ति को अलङ्कारों का उपलक्षण मानने काभाव और वामन का 'सौन्दर्यम् अलङ्कारः' का व्यापक भाव सन्निहित है।

आचार्य कुन्तक **काव्य का लक्षण** बताते हुए कहते हैं–

**शब्दार्थौ सहितौ वक्रकवि व्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।**[२२]

इसमें तीन प्रमुख बातें हैं–(१) सहित शब्द और अर्थ सम्मिलित रूप से काव्य हैं। (२) ये शब्द और अर्थ वक्रकवि व्यापार से युक्त रचना में आये हों। (३) वह रचना सहृदयाह्लादक हो।

काव्य के इसी भेदक तत्त्व वक्रोक्ति को कुन्तक स्पष्ट करते हुए कहते हैं–

**वक्रोक्तिः। प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा। कीदृशी वैदग्ध्यभङ्गी–भणितिः। वैदग्ध्यं विदग्धभावः कविकर्मकौशलं तस्य भङ्गी विच्छित्तिः तया भणितिः। विचित्रैवाभिधा वक्रोक्तिरित्युच्यते।**[२३]

आचार्य कुन्तक विचित्र अर्थात् असामान्य कथन शैली अभिधा को ही काव्य का प्राण समझते हैं। विचित्र अभिधा अर्थात् वक्र कवि व्यापार। इसको स्पष्ट करते हुए कहते हैं–

**शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्ध व्यतिरेकी वक्रः कविव्यापारः।**
**वक्रभावः प्रसिद्धप्रस्थानव्यतिरेकी वैचित्र्यम्।।**

## आचार्य कुन्तक कृत वक्रता के भेद

आचार्य कुन्तक ने वक्रता के छः भेद किये हैं। उन छः प्रमुख भेदों में भी अनेक भेद प्रभेद किये हैं।[२४] प्रमुख भेद इस प्रकार हैं–(१) वर्णविन्यासवक्रता, (२) पदपूर्वार्द्धवक्रता, (३) प्रत्ययवक्रता या पदपरार्द्धवक्रता, (४) वाक्य वक्रता, (५) प्रकरण वक्रता, (६) प्रबन्धवक्रता।[२५]

## वर्णविन्यास वक्रता

यह व्यञ्जनों के विशिष्ट क्रम में विन्यास का चमत्कार है।[२६] वर्णविन्यासवक्रता का प्रथम

प्रकार का सौन्दर्य वह है जहाँ एक, दो अथवा बहुत वर्ण थोड़े-थोड़े अन्तर से बार-बार उसी रूप में ग्रथित होते हैं। इस प्रकार एक वर्ण, दो वर्ण या बहुत वर्णों की आवृत्ति के चमत्कार-भेद से यह वक्रता तीन प्रकार की हो जाती है।[२७] वर्णविन्यासवक्रता का दूसरे प्रकार का सौन्दर्य भी तीन प्रकार का होता है-(क) जहाँ ककार से मकार तक के स्पर्श वर्ण अपने वर्ग के अन्तिम वर्ण ङकार आदि से संयुक्त रूप में बार-बार उपनिबद्ध हों। (ख) जहाँ तकार, लकार, नकार आदि दो बार उच्चारित होकर बार-बार प्रयुक्त हों। (ग) उक्त दोनों (वर्गान्तयोगी स्पर्शवर्णों और तकार, लकार, नकार आदि) से भिन्न शेष व्यञ्जन वर्ण रेफ आदि से युक्त होकर जहाँ बार-बार निबद्ध हो।[२८] इन सभी वर्णविन्यास वक्रता के दो प्रकारों में प्रत्येक को त्रिविध बताया गया है। वर्णविन्यास वक्रता का एक अन्य चमत्कार वह होता है जहाँ व्यञ्जनों की अव्यहित (व्यवधानरहित) स्थिति में स्वरों के असादृश्य के कारण हृदयाकर्षण होता है। अव्यवधान से एक, दो या अनेक वर्णों कीभी स्थिति हो सकती है। ऐसा चमत्कार वर्णों की व्यवधान युक्त स्थिति में भी हो सकता है यह बात सम्बन्धित कारिका में अपि शब्द के प्रयोग से स्पष्ट है-

**क्वचिदव्यवधानेऽपि मनोहारिनिबन्धना।**
**सा स्वराणामसारुप्यात् परां पुष्णाति वक्रताम्।।**[३०]

आचार्य कुन्तक ने सभी प्रकार की वर्णविन्यासवक्रताओं में वर्णों का अत्यन्त आग्रह (व्यसनिता) पूर्वक प्रयोग करने का निषेध किया है। उन्होंने असुन्दर वर्णों के प्रयोग को अनुचित कहा है। सबसे महत्त्वपूर्ण बात यह है कि वर्णों का प्रस्तुत वस्तु के औचित्य के अनुकूल प्रयोग होना चाहिए। सर्वत्र नये-नये वर्णों की पुनरावृत्ति भी होनी चाहिए।[३१] वर्णों के निबन्धन में औचित्य के साथ-साथ रसानुकूल श्रुतिपेशलता भी विद्यमान होनी चाहिए।

कुन्तक ने यमक नामक वर्ण-विन्यासवक्रता का भी प्रतिपादन किया है। वर्ण विन्यासवक्रता के अन्तर्गत उन्होंने प्राचीन आचार्यों के द्वारा स्वीकृत अनुप्रास और यमक अलङ्कार[३२] तथा वृत्तियों का भी ग्रहण कर लिया है। उन्होंने इसे माधुर्य आदि गुणों और सुकुमार आदि मार्गों की अनुगामिनी कहा है।[३३] कुन्तक द्वारा प्रतिपादित वर्ण विन्यास वक्रता के अनेक स्थल ध्वनिवादी की दृष्टि में रसध्वनि के स्थल भी हो सकते हैं क्योंकि वर्णों की रस-व्यञ्जकता सुप्रसिद्ध है। कुन्तक ने इस तथ्य की ओर किञ्चित् निर्देश करते हुए कहा भी है कि कठोर रस (वीभत्स, रौद्र आदि) के प्रसङ्ग में प्रस्तुत रस के औचित्य से शोभित होने वाले उसी प्रकार के वर्णों के प्रयोग की अनुमति है।[३४] उन्होंने परुष रस में वर्णविन्यास वक्रता का एक रमणीय उदाहरण प्रस्तुत किया है।[३५]

## पदपूर्वार्द्धवक्रता

वक्रता का द्वितीय मुख्य भेद पदपूर्वार्द्धवक्रता है। सुबन्त और तिङन्त को पद कहते हैं। पद पूर्वार्द्ध का तात्पर्य मूल शब्द अर्थात् प्रकृति से है। सुबन्त पद का पूर्वार्द्ध प्रातिपादिक और तिङन्त

पद का पूर्वार्द्ध धातुरूप होता है। पद-पूर्वार्द्धवक्रता के १० अवान्तर भेद बताये गये हैं। उन अवान्तर भेदों के भी कतिपय उपभेद या प्रभेद कुन्तक ने प्रदर्शित किये हैं। ये भेदोपभेद इस प्रकार हैं–

**( १ ) रूढि वैचित्र्यवक्रता**–शब्द के नियत अर्थ के बोधक धर्मविशेष को रूढ़ि कहते हैं।[३६] जहाँ लोकोत्तर तिरस्कार या प्रशंसारूप उत्कर्ष के प्रतिपादन के अभिप्राय से रूढ़ि शब्द के द्वारा वाच्य अर्थ की असम्भव अर्थ के अध्यारोप से युक्त अथवा किसी विद्यमान धर्म के अतिशय-वर्णन के भाव से युक्त प्रतीति होती है वहाँ रूढ़िवैचित्र्यवक्रता होती है।[३७] इसके प्रमुख दो प्रकार हैं–(क) जहाँ कवि, वक्ता को स्वयं अपने में ही उत्कर्ष या अपकर्ष का समारोप करते हुए प्रस्तुत करे, (ख) जहाँ कोई अन्य वक्ता किसी अन्य के उत्कर्षापकर्ष का वर्णन करे।[३८] ये दोनों प्रकार पुनः असम्भाव्य धर्म और सद्धर्म (विद्यमान धर्म) के अतिशय के आरोप-भेद से दो-दो प्रकार के होते हैं। इस प्रकार रूढ़िवैचित्र्य वक्रता के कुल ४ प्रभेद होते हैं। प्रतीयमान धर्म के बाहुल्य से इसके बहुत भेदों की कल्पना कुन्तक ने की है।[३९]

**( २ ) पर्यायवक्रता**–इसके अन्तर्गत वैचित्र्य के भेद से शब्द के षड्विध पर्याय माने गये हैं–(क) अर्थ का अन्तरतम (वास्तविकभाव को छूने वाला) पर्याय, (ख) अर्थ के अतिशय (उत्कर्ष) का पोषक पर्याय, (ग) स्वयं अथवा अपने विशेषणभूत अन्य पद के द्वारा श्लिष्टता आदि की रमणीय छाया से वर्ण्यमान अर्थ को सुशोभित करने वाला पर्याय, (घ) स्वयं (बिना विशेषण के) अथवा विशेषण के योग से भी अपने अतिशय सौन्दर्य से मनोहर पर्याय, (ङ) वर्ण्यमान वाच्यार्थ के किसी असम्भाव्य अभिप्राय से युक्त पर्याय, (च) रूपक उत्प्रेक्षा आदि अलङ्कारों का शोभाधायक होने से मनोहर पर्याय। ये षड्विध पर्याय काव्य में रमणीय एवं अद्भुतवैचित्र्य सम्पन्न पर्यायवक्रता की सृष्टि करते हैं।

**( ३ ) उपचारवक्रता**–इस वक्रता में अन्य वस्तु के धर्म का अन्य वस्तु पर अत्यन्त अल्प साम्य के आधार पर आरोप कर लिया जाता है। इसके तीन प्रकार हैं–(क) अमूर्त वस्तु पर मूर्त का आरोप, (ख) अचेतन पर चेतन का आरोप, (ग) रूपक आदि अलङ्कार की आधारभूत वक्रता। कुन्तक ने उपचार वक्रता के सहस्त्रों प्रकार की सम्भावना व्यक्त की है।[४०]

**( ४ ) विशेषणवक्रता**–इसके दो प्रकार क्रियाविशेषण वक्रता और कारक विशेषणवक्रता हैं।

**( ५ ) संवृति वक्रता**–जहाँ वैचित्र्य-कथन की इच्छा से सर्वनाम आदि के द्वारा वस्तु का संवरण (गोपन) किया जाता है। कुन्तक ने वस्तु और वर्णन शैली के भेद से संवृत्ति वक्रता के छः प्रकारों का निरूपण किया है।[४१] उत्कर्ष युक्त वस्तु, स्वभावोत्कर्ष की चरम सीमा को प्राप्त वस्तु, अत्यन्त सुकुमार वस्तु, स्वानुभवसंवेद्य वस्तु, परानुभवैकगम्यवस्तु, किसी दोष से युक्त वस्तु इत्यादि विविध प्रकार की वस्तुओं का कवि की वचनभङ्गी के द्वारा चमत्कारपूर्ण संवरण वर्णित किया जाता है।

**(६) पदस्यान्तर्गत प्रत्यावक्रता**–(क) जहाँ पर पद के मध्य में आने वाले कृदादि प्रत्यय अपने उत्कर्ष के द्वारा वर्ण्यमान वस्तु के औचित्य की शोभा को विकसित करते हैं। (ख) जहाँ पर (मुमादि) आगमों के विलास से मनोहर कोई प्रत्यय, बन्ध–सौन्दर्य की पुष्टि करता है, जैसे–सुभगम्यन्यभावः।

**(७) वृत्तिवैचित्र्यवक्रता**–जहाँ पर अव्ययीभावसमास, तद्धित एवं सुब्धातु वृत्तियों का उचित आधार पर निर्मित सौन्दर्य अभिव्यक्त होता है वहाँ वृत्तिवैचित्र्यवक्रता होती है। कुन्तक ने उदाहरणों में क्रमशः अधिमधु, पाण्डिम, एकातपत्रायते आदि शब्दों को सौन्दर्य का द्योतक बताया है।

**(८) भाववैचित्र्यवक्रता**–धात्वर्थ (क्रिया) रूप भाव को साध्य रूप में कहकर सिद्धरूप में कहने पर भाववैचित्र्यवक्रता होती है।

**(९) लिङ्गवैचित्र्यवक्रता**–इसके तीन प्रकार हैं–(क) भिन्न–भिन्न लिङ्ग वाले शब्दों का समानाधिकरण्य में प्रयोग होने से वैचित्र्य, (ख) शब्द विशेष के अन्य लिङ्गों के होने पर भी स्त्रीलिङ्ग के प्रयोग से शोभावृद्धि, (ग) अन्य लिङ्गों के सम्भव होने पर भी अर्थ के औचित्य के अनुसार किसी विशेष लिङ्ग का प्रयोग होने से वैचित्र्य।

**(१०) क्रियावैचित्र्यवक्रता**–धातुरूप पद के पूर्वार्द्ध की वक्रता क्रिया–वैचित्र्य वक्रता कहलाती है। क्रिया के वैशिष्ट्य–भेद से यह पाँच प्रकार की बतायी गयी है–(क) क्रिया की कर्ता के प्रति अत्यन्त अन्तरङ्गता, (ख) क्रिया द्वारा (अन्य कर्ता की अपेक्षा) किसी विशेष कर्ता के वैचित्र्य का प्रतिपादन, (ग) क्रियाविशेषण वैचित्र्य, (घ) क्रिया का उपचार के कारण मनोज्ञ होना, (ङ) क्रिया द्वारा कर्म आदि कारकों के संवरण का वैचित्र्य।

**पदपरार्द्ध या प्रत्ययवक्रता**

पदों का उत्तरार्द्ध सामान्यतः प्रत्यय रूप होता है। कुन्तक ने इसके ६ मुख्य प्रभेदों का वर्णन किया है–

(१) कालवैचित्र्यवक्रता, (२) कारकवक्रता, (३) संख्या या वचन वक्रता, (४) पुरुष वक्रता, (५) उपग्रह (आत्मनेपद अथवा परस्मैपदाश्रित धातु–प्रयोग) वक्रता, (६) प्रत्ययान्तर विहित प्रत्ययवक्रता।

कुन्तक ने प्रत्ययवक्रता के भेदों का विवेचन करके 'सापरा पदवक्रता' कहकर उपसर्ग और निपात की वक्रता का अलग से प्रतिपादन किया है। वस्तुतः प्रत्यय वक्रता को भी पदवक्रता ही कहना चाहिए क्योंकि पद से अविच्छिन्न रूप में स्थित प्रत्यय ही वक्रत्व का द्योतक होता है। वहाँ प्रत्यय की पद से पृथक् सत्ता नहीं होती।

**वाक्य-वक्रता**–पद समुदाय को वाक्य कहते हैं। कुन्तक की वाक्यवक्रता का क्षेत्र बहुत

व्यापक है। इसके अन्तर्गत वस्तु वक्रता एवं समस्त उपमा आदि अलङ्कार आ जाते हैं। कुन्तक ने वाक्य वक्रता के अन्तर्गत वाच्यालङ्कारों के साथ-साथ कुछ प्रतीयमान अलङ्कारों के भी उदाहरण रखे हैं। प्रतीयमान अलङ्कार ही व्यङ्ग्य प्रधान होने पर ध्वनिवादी की अलङ्कारध्वनि है। कुन्तक ने वाक्य-वक्रता के असंख्य भेदों की सम्भावना व्यक्त की है।[८२]

**प्रकरण वक्रता**-प्रबन्ध के एक देश को प्रकरण कहा जाता है। अपरिमित उत्साह से प्रेरित होकर कवि अपने सहज और आहार्य कौशल से प्रकरण में जो अपूर्व उत्कर्ष उत्पन्न करता है, वह प्रकरण वक्रता है। कुन्तक ने इसके ९ प्रकार बताये हैं जो इस प्रकार हैं-

(१) जहाँ कवि अपनी विशेष उद्भावना के द्वारा प्रकरण में, पात्रों के चरित्र का उत्कर्ष दिखता है जैसे-रघुवंश के रघु-कौत्स संवाद में।

(२) जहाँ कवि प्रकरण में प्रस्तुत इतिहासाश्रित कथा में स्वोत्पाद्य कल्पनाप्रसूत अंश के सौन्दय र्से वैचित्र्याधान करता है।

(३) जहाँ कवि, काव्य के मुख्य पल को सिद्ध कराने में सक्षम प्रकरणों के उपकार्योपकारक भाव को अपनी प्रतिभा से प्रस्तुत करता है।

(४) जहाँ कवि एक ही पदार्थ को प्रत्येक प्रकरण में रसों एवं अलङ्कारों के द्वारा मनोहर बनाकर बारम्बार उपनिबद्ध करता है।

(५) जहाँ कवि काव्य-सौन्दर्य की अभिवृद्धि करने के लिए अद्‌भुत वैचित्र्य के सृजक जलक्रीडादि प्रासङ्गिक प्रकरणों को प्रस्तुत करता है।

(६) जब किसी विशेष प्रकरण में काव्याङ्गी रस की इस ढंग से निष्पत्ति हो जैसी उसके पूर्व या बाद के प्रकरणों में न हो।

(७) जहाँ कवि प्रधान वस्तु की सिद्धि के लिए अन्य (अप्रधान) वस्तु की विचित्रता को प्रस्तुत करता है। जैसे-मुद्राराक्षस नाटक के षष्ठाङ्क में राक्षस और पुरुष की वार्ता का प्रकरण।

(८) जब कवि दर्शकों के आह्लाद हेतु किसी नाटक के मध्य में एक दूसरे नाटक का प्रकरण प्रस्तुत करते हैं।

(९) मुख, प्रतिमुख आदि सन्धियों के यथोचित संविधान से मनोहर, उत्तरवर्ती अङ्गों के सन्निवेश से युक्त प्रकरण।

**प्रबन्ध वक्रता**

प्रबन्ध का तात्पर्य सम्पूर्ण नाटक या काव्य आदि से है। कुन्तक ने प्रबन्ध वक्रता के ६

प्रकारों का निरूपण किया है–

(१) जहाँ कवि आधारभूत ऐतिहासिक ग्रन्थ के अङ्गीरस का स्ववर्णित प्रबन्ध में अपनी प्रतिभा से परिवर्तन कर देता है। जैसे–महाभारत के शान्तरस का वेणीसंहार नाटक में वीररस में परिर्वतन।

(२) जब कवि नाटक के चरित्र का उत्कर्ष करने वाली घटना के आधार पर कथा का समापन करता है। जैसे किरातार्जुनीय महाकाव्य का किरात–वेषधारी शिव और अर्जुन के युद्ध के साथ समापन।

(३) जहाँ कवि प्रधान कथावस्तु के मुख्य फल की सिद्धि के उपाय का तिरोधान करने वाले अन्य कार्य द्वारा बीच में कथा का विच्छेद कर देता है किन्तु उसी कथा–विच्छेदक स्थल पर मुख्य फल की सिद्धि हो जाती है। जैसे–'शिशुपालवध' महाकाव्य में (युधिष्ठिर के राजसूय) यज्ञ के प्रकरण की सिद्धि।

(४) जहाँ कवि विशेषफल की सिद्धि में तत्पर नायक को अन्य फलों की भी प्राप्ति करा देता है। जैसे नागानन्द नाटक में नायक जीमूतवाहन द्वारा पितृभक्ति के साथ–साथ, गन्धर्व कन्या मलयवती से विवाह और नाग–कुल की रक्षा आदि।

(५) प्रबन्ध की प्रधानकथा को (प्रबन्ध के) नामकरण से ही सूचित कर देने का वैचित्र्य जैसे–मुद्राराक्षस।

(६) अनेक महाकवियों के द्वारा एक ही कथा के आधार पर विभिन्न काव्य नाटक आदि की रचना, विलक्षणता के द्वारा अद्‌भुत प्रबन्ध वक्रता की सृष्टि करती है। जैसे–रामायण के आधार पर रामाभ्युदय, वीरचरित, बालरामायण आदि की रचना।

## वर्ण विन्यास वक्रता का उदाहरण

आचार्य रुद्रट[63] का एक रमणीय उदाहरण द्रष्टव्य है–

एकाकिनी यदबला तरुणी तथाहमस्मिन्गृहे गृहपतिश्च गतो विदेशम्।
कं याचसे तदिह वासमियं वराकीश्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ।।

इस पद्य में क, ग, ब, म तथा ध आदि वर्णों की आवृत्ति होने से वर्ण विन्यास वक्रता है। ध्वनि सिद्धान्त की दृष्टि से अर्थशक्तिमूल वाक्यगत वस्तु ध्वनि है। वास न देना वाच्य अर्थ है। इस निषेध रूप वाच्यार्थ से वासानुमति प्रदान (विधिरूप) अर्थ व्यंग है।

जयदेव ने अपने प्रसन्नराघव नाटक में वक्रोक्ति का उत्कर्ष बताते हुए कहा है–

निन्द्यन्ते यदिनाम मन्दमतिभिर्वक्रा: कवीनां गिर:,
स्तूयन्ते न च नीरसैमृगदृशां वक्रा: कटाक्षच्छटा:।
तद्वैदग्ध्यवतां सतामपिमन: किं नेहते वक्रतां,
धत्ते किं न हर: किरीटशिखरे वक्रां कलामैन्दवीम्।।

आचार्य कुन्तक ध्वनिसिद्धान्त का साक्षात् विरोध नहीं करते किन्तु वक्रोक्ति सिद्धान्त की स्थापना के कारण ध्वनि का विरोध वक्रोक्ति सिद्धान्त का मूल उत्स है भामह की वक्रोक्ति धारणा। आचार्य कुन्तक ने इसी वक्रोक्ति को काव्य विशेष की कोटि में रखकर उसे काव्य की आत्मा के रूप में प्रतिष्ठापित किया है। कुन्तक के वक्रोक्ति को ध्वनिवादी आचार्यों ने भले ही मान्यता नहीं दी है तथापि वक्रोक्ति के विशिष्ट प्रकारों को ध्वनि के भीतर अन्तर्भुक्त मानकर कुन्तक के प्रति अपना आदर प्रकट किया है।

## सन्दर्भ

१. भामहालङ्कार ६।६४; काव्यशास्त्र एवं काव्यपरिशीलन, पृ० ७
२. भामहालङ्कार, काव्यशास्त्र एवं काव्यपरिशीलनम्, पृ० २४
३. तद् विदाह्लादकारित्वमेव वक्रत्वम्।-वक्रोक्तिजीवित, पृ० ९१
४. वक्रोक्ति जीवित १।१० वृत्ति सहित
५. 'विदग्धभणितिभङ्गिनीनिवेद्यं वस्तुनो रूपं न नियतस्वभावम्' इति अवन्तिसुन्दरी।-का०मी०, पृ० ११६
६. शब्दार्थो सहितौ वक्रकविव्यापारशालिनी।
बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।-वक्रोक्तिजीवित १।७
७. (अ) वक्रो योऽसौ शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्धव्यतिरेकी... कविव्यापार:।-वक्रोक्तिजीवित, पृ० ३६
(ब) वक्रोक्ति: प्रसिद्धाभिदानव्यतिरेकिणी विचित्रैवाभिधा।-वही, पृ० ५१
८. स्तुतिनिन्दार्थमतिशयोक्तिरर्थवाद:।-शृ०प्र०, भाग-२, पृ० ९ और ३११
९. यदवक्रं वचश्शास्त्रे लोके च वच एव तत्।
वक्रं यदर्थवादी तस्य काव्यमिति स्मृति:।।-शृ०प्र०, भाग-१, पृ० २११
१०. शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेण अवस्थानाम्।-लोचन, पृ० ४९९
११. विचित्रवक्रत्वविजृम्भितं हर्षचरिते प्राचुर्येण भट्टबाणस्य विभाव्यते।
भवभूतिराजशेखरविरचितेषुबन्धसौन्दर्यसुभगेषु मुक्तकेषु परिदृश्यते।।-वक्रोक्तिजीवित, पृ० १५६
१२. सुबन्धुर्बाणभट्टश्च कविराज इति त्रय:।
वक्रोक्तिमार्गानिपुणाश्चतुर्थो विद्यते न वा।।-राघवपाण्डवीय १।४१
१३. कादम्बरी, पूर्व भाग

